मण्डनाः ॥ १४ ॥ योनिः प्रविशतस्तस्य नेपथ्य व्यवधायकम् । लोकाकाशोदरा नाम विशाला रङ्गभूमिका ॥ १५ ॥ पुद्गलस्कन्धनामानः देशोपस्करसंचयाः । पात्राणि च विचित्राणि देहान्यसिलदेहिनः ॥ १६ ॥ तत्र च क्वापि दुःखौघप्रस्तनारकरूपिणम् । क्वचिन्नानाविधाकारतिर्यगाकारधारिणम् ॥ १७ ॥ क्वचिद्भूरि चतुर्वर्गमर्त्यभावानुकारिणम् । क्वचिच्चतुर्विधामर्त्यरूपैर्नैकविस्मयम् ॥ १८ ॥ क्वचित्स्तोकप्रमोदार्थं क्वचिदानन्द पूरितम्। क्वचित्सम्पत्तिसम्पन्नं क्वचिद्दारिद्र्यदूषितम् ॥ १९ ॥ क्वचिद्रोगभराक्रान्तं क्वचिद्धारी क्वचिद्धरम् । इत्थं च स्वाज्ञया लोके नटन्तं वीक्ष्य मोदते ॥२०॥ कलापकम् ॥ नियतिर्यदृच्छाद्यासु देवीषु प्रवरा गुणैः । महादेवी तस्य कालपरिणत्यभिधास्ति च ॥ २१ ॥ अतिमात्रप्रेमपात्रं सा भर्तुरमवद्यथा । तां विना स यथा नैव क्षणमप्य वतिष्ठते ॥ २२ ॥ क्षणाहोरात्रमासर्तुवर्षपल्योपमादिना । नृपत्ता परिवारेण परितः परिवेष्टिता ॥ २३ ॥ सुषमा दुःषमाद्याभिः सखीभिः सा च संयुता । सदा चपःपरार्धप्या विडम्बयति देहिनः ॥ २४ ॥ युग्मम् ॥ दम्पत्योरनयोरेव नाटकं वीक्ष्यमाणयोः । याति कालः सदानन्दरसपूरितचेतसोः ॥ २५ ॥ देव्या प्रोक्तोऽन्यदा राजा सर्वं मे स्वस्त्यसत्त्वताः । सम्पन्नं केवलं पुत्रो यदि स्यात्सुन्दरं ततः ॥ २६ ॥ तेनोक्तमावयोरेकचित्तस्याभ्राविता सुतः । महाप्रसाद इत्युक्त्वा प्रतिपन्नं चकार सा ॥ २७ ॥ देव्या दृष्टोऽन्यदा स्वप्ने प्रविशन्नास्येन कश्चितः । निर्गतः पुरुषो नीतः स च मित्रेण केनचित् ॥ २८ ॥ देव्यास्यातमेव स्वप्नं नृपतिस्तत्र व्यचारयत् । पुत्रस्ते

---

१ ०पूरितम् ग० । २ सर्वसम्पत्ता ग० । ३ ०पुस्य पि० ग० । ४ ०मचो स्व० क० ख० ।

भविता किन्तु गेहं मोक्ता गुरोर्गिरा ॥ २९ ॥ एवमप्यस्त्विति प्रोच्य देवी गर्भं बभार सा । नृपोऽप्यभयदानाद्यं
तद्दोहदमपूरयत् ॥ ३० ॥ भूभुजा भव्यपुरुष इति नाम विनिर्म्ममे । देव्या तु सुमतिरिति जातस्याथ तनूभुवः
॥ ३१ ॥ इतोऽगृहीतसङ्केता ब्राह्मण्यस्ति तया सखी । प्रोक्ता प्रज्ञाविशालाख्या पश्येदं सखि ! कौतुकम्
॥ ३२ ॥ यदेष राजा निर्बीजो देवी वन्ध्या तयोः कथम् [1] । सुतः साप्यभ्यधान्मुग्धेऽन्वर्थसंज्ञासि निश्चितम्
॥ ३३ ॥ भूपतिर्बहुबीजोऽयं देवी चानन्तदारका । जगत्त्रितयजन्तूनां जनकत्वेन तत्त्वतः ॥ ३४ ॥
सचिवैरविवेकाद्यैश्चक्षुर्दोषभयात्पुनः । अन्यथा ख्यापितं लोके न जानीषे यदित्यपि ॥ ३५ ॥ युग्मम् ।
तत्कथं ख्यापितः सूनुरयमित्युदिता तया । भूयः प्रज्ञाविशालोचे तत्राकर्णय कारणम् ॥ ३६ ॥ पुर्य्यामगुष्या-
मेवास्ति चिरं परिचितो मम । पुमान् सदागमो नाम हृष्टो हृष्टः स चान्यदा ॥ ३७ ॥ पृष्टो हर्षनिमित्तं च स
एवं मामभाषत । राज्ञीविज्ञापितो राजा निर्बीजत्वविगीतताम् ॥ ३८ ॥ स्वस्य देव्याश्च वन्ध्यात्वमपनेतुमिमं
सुतम् । प्राकाशयत्स चात्यन्तं प्रियो मे तदहं समुत् ॥ ३९ ॥ युग्मम् ॥ कारणं तदिदं भद्रे ! पुत्रस्यास्य
प्रकाशने । ब्राह्मण्यूचे कथं तर्हि तस्याभीष्टः स दारकः ॥ ४० ॥ अथ प्रज्ञाविशालाह यतोऽतिक्रान्तशैशवः ।
स तस्य शिष्यो भविता वल्लभोऽनेन हेतुना ॥ ४१ ॥ ब्राह्मण्युवाच मे तर्हि तं दर्शय सदागमम् । तत्र प्रमुदिता
प्रज्ञाविशालाथ निनाय ताम् ॥ ४२ ॥ सेव्यमानो जनैर्भव्यैस्तन्वानस्तत्त्वदेशनाम् । विदेहराजमार्गस्थो दृष्ट-

१ दुर्जनानां चक्षुर्दोषभयादित्यर्थः । २ निर्बीजवचनीयताम् क० ख० ग० घ० ।

भाग्यो सदागमः ॥ ४३ ॥ दृष्टागृहीतसङ्केता तद्दर्शनवशादय । सेवा च पर्युपासाते ते द्वे अपि सदागमम् ॥ ४४ ॥ सदागमनिदेशेनान्यदा प्रज्ञाविशालया । स भव्यपुरुषो भाग्या मृत्वानीतस्तदन्तिके ॥ ४५ ॥ दृष्टा सदागम दृष्टः स भव्यपुरुषस्तदा । शिक्षार्थं कलास्तस्य पितृभ्यामर्पितो मुदा ॥ ४६ ॥ ततो दिने दिने याति स पार्श्वे तस्य धीमतः । सदागमस्य शिक्षार्थः सार्द्धं प्रज्ञाविशालया ॥ ४७ ॥ अन्यदा पाश्वर्तोऽसौ समामध्ये सदागमः । सहितस्तैस्त्रिभिस्तावत् कोऽपि तुमुलोऽभवत् ॥ ४८ ॥ येस्य कोलाहलो लोकाः ! श्रूयते नीयतेऽधुना । संसारिजीवनामोऽयं तस्करो वध्यधामनि ॥ ४९ ॥ तदाकर्ण्योन्मुखीपर्भीयमान यथावनो । भस्मना लिप्तसर्वाङ्गं चित्रं गैरिकहस्तकैः ॥ ५० ॥ चर्चितं च मषीपुण्ड्रैः कमवीरस्त्रार्चितम् । शरावमालया गुम्फां विडम्बितभुजान्तरम् ॥ ५१ ॥ वैरत्सिटकखण्डेन विभिन्नसपनातपम् । आरोपितं खरे पश्चलोष्ठ च गलकन्दले ॥ ५२ ॥ नगरारक्षपुरुषैः वेष्टैः परिवेष्टितम् । साधुलोकैः शोच्यमान कम्पमानशरीरकम् ॥ ५३ ॥ विलो दशापि पञ्चपन्थं भयसम्भ्रान्तया दृशा । संसारिजीवनामानमद्राक्षीदय तस्करम् ॥ ५४ ॥ पञ्चभिः कुलकम् ॥ एन विलोक्य च प्रज्ञाविशाला सदया हृदि । दध्यौ नास्य वराकस्य त्रातास्त्यन्यः सदागमात् ॥ ५५ ॥ ध्यात्वेति सन्मुखं गत्वा तमूचे सा मलिम्लुचम् । सदागममिमं भद्र ! शरण्यं शरणं भज ॥ ५६ ॥ तस्करोऽपि तदाकर्ण्य तमुद्दिश्य

१ सदाऽय प० क० ख० । २ अन्यदाऽसौ समामध्ये क्रीडयाऽऽस्ते सदागमः ख० । ३ अयं श्लोकः ता० क० ख० घ० प्रतिषु नास्ति । ४ वीर्यकरण्डकखण्डेन । ५ परितैः प० ग० ।

सदागमम् नाथ ! मां रक्ष रक्षेति पूच्चकारोच्चकैः स्वरम् ॥ ५७ ॥ सदागमेनाऽभीदानाद् विहिताश्वासनस्ततः ।
स्तेनस्तस्य पदद्वन्द्वं शरणं प्रतिपन्नवान् ॥ ५८ ॥ सदागमभयत्रस्तैर्मुक्तमारक्षकैरिमम् । ततोऽग्रहीतसङ्केता विश्वस्तं
दस्युमालपत् ॥ ५९ ॥ भद्र ! केनापराधेन यमकिङ्करसोदरैः । भवानेतैः पुरारक्षपुरुषैर्जगृहे हठात् ॥ ६० ॥
सोऽवोचत् पृष्टया भद्रे ! पर्याप्तं वार्त्तयानया । इयं हि श्रूयमाणापि व्यथते हृदयं सताम् ॥६१॥ यदि त्वानन्य-
सामान्यज्ञानज्ञातजगत्त्रयः । वेत्त्येवामुं व्यतिकरं भगवान् श्रीसदागमः ॥ ६२ ॥ ततः सदागमेनोक्तं महद्दस्याः
कुतूहलम् । अतोऽयं निजवृत्तान्तो भवता भद्र ! कथ्यताम् ॥ ६३ ॥ तस्करः प्राह यद्येवं [1]विविक्तं तद्विधीयताम् ।
न मे कथयतो येन जनलज्जा भवेत्प्रभो ! ॥ ६४ ॥ ततो भगवता सर्वा पर्षदालोकिता सती । दूरदेशं समाश्रित्य
तस्थौ विस्मितमानसा ॥ ६५ ॥ आकर्णय त्वमप्येवं सूरिणा गदिता सती । तत्र प्रज्ञाविशालास्थात्नृपसूनुसमन्विता
॥ ६६ ॥ अथाग्रहीतसङ्केतां समुद्दिश्य विशेषतः । चतुर्णां पुरतस्तेषां दस्युर्वक्तुं प्रचक्रमे ॥ ६७ ॥ अस्त्यत्र लोके
विख्यातमनन्तजनसङ्कुलम् । यथार्थनामकमसंव्यवहाराभिधं पुरम् ॥ ६८ ॥ तत्रानादिवनस्पतिनामानः कुल-
पुत्रकाः । वसन्ति तत्र च कर्म्मपरिणाममहीभुजा ॥ ६९ ॥ नियुक्तौ तीव्रमोहोदयात्यन्ताबोधनामकौ ।
महत्तमबलाध्यक्षौ तिष्ठतः स्थायिनौ सदा ॥ ७० ॥ युग्मम् ॥ ताभ्यां कर्म्मपरीणाममहाराजस्य शासनात् ।
निगोदाख्यापवरकेष्वसंख्येषु दिवानिशम् ॥ ७१ ॥ क्षिप्त्वा संपिण्ड्य धार्यन्ते सर्वेऽपि कुलपुत्रकाः । प्रसुप्त-

१ स्वयम् ग० । २ निर्जनम् । ३ ०स्त्य क० ख० ग० घ० ।

यन्मूर्च्छितवन्मत्तवन्मृतवच्च ते ॥ ७२ ॥ युग्मम् ॥ ते स्पष्टचेष्टाचैतन्यभाषादिगुणवर्जिताः । छेदभेदप्रतीघातदाहादीन् नाप्नुवन्ति च ॥ ७३ ॥ अपरस्थानगमनप्रवृत्तो नापि कश्चन । क्रियतेऽन्योऽपि त्रैलोक्यव्यवहारः कथंचन ॥ ७४ ॥ संसारिजीवसंघेन तादात्म्येन कुटुम्बिना । कालो निर्गमितः पूर्वं तत्रानन्तो मयापि हि ॥ ७५ ॥ तत्राप्यवसुतोऽन्यैर्दुर्दशास्थानो महत्तमः । व्यवस्थया प्रतीहार्या तत्परिणामित्यथा ॥ ७६ ॥ देवकर्मपरिणाममहाराजनिदेशतः । तन्नियोगाभिधो दूतो देवपादान् दिदृक्षति ॥ ७७ ॥ तीव्रमोहोदयात्यन्ताबोधाभ्यामथ सत्वरम् । मोचयैस्तुदिता यस्या दूतमन्तर्मुमोच सा ॥ ७८ ॥ ततः कृतनमस्कारमासीनं दौष्किासने । कृतकप्रश्नपूर्वं तं दूतमाह महत्तमः ॥ ७९ ॥ केन कार्येण संप्रेष्य भवन्तं दूतसत्तम ! । अनुग्रहोऽयमस्माकं देवपादैः कृतो महान् ॥ ८० ॥ तथाच तन्नियोगोऽपि को युष्माकं विना परः । अनुग्रहार्थो देवस्यागमे हेतुरयं तु मे ॥ ८१ ॥ लोकस्थितस्याभिधा चित्रमात्यानुसारेवासना । भवतां विदितैवास्ति देवस्य महती क्षमा ॥ ८२ ॥ देवोऽन्यदा च ताम्ये यथा लोकस्थिते ! रिपुः । तदागमाभिधोऽस्माकमेक एवास्ति दुर्जयः ॥ ८३ ॥ निःशङ्कमानसो लोकाचमर्यां स च निर्दयो । नयत्यसदसम्पाया कांचिन्निःसार्य मद्भुवः ॥ ८४ ॥ तत एवं स्थिते लोकस्थिते ! कालेन गच्छता । भविताकालस्तोको लोके स्तोकीभवत्यसम् ॥ ८५ ॥ भवतस्तदेवं कर्तव्यमनन्तजनपूरितम् । यस्यर्क्षभवतारारम्यं पुरं मम सनातनम् ॥ ८६ ॥ ततः सदाममस्नाम्ना यावन्तो यान्ति निर्वृतिम् । तावन्ता

१ ०षदे म० ।

॥ ८७ ॥ ततः प्राज्यजनत्वेन वार्त्तामपि न कश्चन । सदागमेन नीतानां
स्तत्संख्ययानीय तत्पदेषु ततस्त्वया ॥ ८८ ॥ ततश्च भुवने भावि नास्माकमयशः स्वसः ! तद् व्यापारं गृहाणैनं विदधे सापि तत्तथा
जनानां प्रश्नयिष्यति ॥ ८८ ॥ ततश्च भुवने भावि नास्माकमयशः स्वसः ! तद् व्यापारं गृहाणैनं विदधे सापि तत्तथा
॥ ८९ ॥ अहं च देवपादोपजीवी यद्यपि तत्त्वतः । तथापि सेवको लोकस्थितेस्तस्या विशेषतः ॥ ९० ॥
तद्द्वारेणात एवाहं तन्नियोग इति स्मृतः । सदागमेन नीताश्च कियन्तोऽप्यधुना जनाः ॥ ९१ ॥ ततोऽहं
प्रहितस्तावज्जनानयनहेतवे । लोकस्थित्या भवन्मूले प्रमाणं यूयमत्र तत् ॥ ९२ ॥ ततो यदादिशत्यार्ये-
त्युक्त्वा दूतस्य जल्पितम् । तथेति प्रतिपेदाते बलाध्यक्षमहत्तमौ ॥ ९३ ॥ महत्तमोऽथ तं दूतमवोचदिति सुन्दर ! ।
उत्तिष्ठात्रत्यलोकानां प्रमाणं दर्शयामि ते ॥ ९४ ॥ गत्वा त्वया यथा तस्मिन् यथादृष्टे निवेदिते । लोकाल्पी-
भावचिन्ता स्यान्न देवस्य कदापि हि ॥ ९५ ॥ इत्युक्त्वात्यन्तबोधेन सहोत्थाय महत्तमः । दूतायोर्ध्वकरस्तस्मै
दर्शयामास तत्पुरम् ॥ ९६ ॥ सर्वतो दर्शयित्वा च दूतमाह महत्तमः । सदागमस्य तस्य त्वं पश्य भद्र ! विमूढताम्
॥ ९७ ॥ स लोकं किल देवस्य निर्वाहयितुमिच्छति । विजानाति वराकस्तत्प्रमाणं न तु सर्वथा ॥ ९८ ॥ तथा—
ह्यत्र पुरे तावत्त्वया प्रत्यक्षमीक्षिताः । प्रासादा गोलकाभिख्याः संख्यातीता बृहत्तमाः ॥ ९९ ॥ निगोदाख्या-
पवरकाः प्रत्येकं तेष्वसंख्यकाः । वसन्ति तेषु चानन्ता एकैकस्मिन्नमी जनाः ॥ १०० ॥ असावनादिसिद्धश्च लोक-
निर्वाहणाग्रहः । सदागमाभिधानस्य रिपोस्तस्य दुरात्मनः ॥ १०१ ॥ अनन्तेनापि कालेन तथापि द्वेषिणामुना ।

१ ०मूलं प्र० क० ख० ग० ।

एकोऽपि मायया यस्के रिक्तमन्यो विधीयते ॥ १०२ ॥ तल्लोकचिरलीभावचिन्ता किं देव चेतसि ?। दूतोऽप्युवाच देवस्यावश्यमत्र सत्यमसत्यमप् ॥ १०३ ॥ युष्माकार्यं विशेषाच्च कथयिष्याम्यदः प्रभोः । किन्तु संपाद्यतां लोकस्थित्यादेशो झटित्यसौ ॥ १०४ ॥ मत्स्यापनोदिताः केऽत्र प्रविष्टेति रहस्यय । तीव्रमोहोदयेनोक्तो बलाध्यक्षः समाकयत ॥ १०५ ॥ किमत्र मन्त्रयेनापि । बहुना कर्म्मभूपतेः । प्राप्यतामयमादेशो घोषणापूर्वकं पुरे ॥ १०६ ॥ निर्विण्णाः स्थानकस्यास्य स्थानान्तरपिपासवः । स्वयमेव चलिष्यन्ति परोलक्षास्ततो जनाः ॥ १०७ ॥ संकथा नेतव्यलोकानां पृष्ठा वृत्तमिम ततः । महेष्यामः स्वर्गेषितास्तन्मध्यावासतो वयम् ॥ १०८ ॥ तीव्रमोहोदयोऽप्यादीदस्यन्वासोपमित्यच । निजस्यापि विज्ञानास्ति भक्ति परिहितस्य न ॥ ॥ १०९ ॥ अनाद्यन्योन्यसंबन्धादत्रैव रतिमागताः । कथं स्थानान्तरं आशु यातुमिच्छन्त्यमी जनाः ? ॥ ११० ॥ नीहाराहारनिभासोच्छ्वासनाश्वर्न्यपि । सर्वेऽप्येते मिथः स्निग्धाः कुर्वन्ति सममेव हि ॥ १११ ॥ अदृष्टान्यस्थानगुणाः स्निग्धाश्चैव परस्परम् । स्वयमेव चलिष्यन्ति तदेतेऽत्र कथं जनाः ॥ ११२ ॥ ततः प्रस्थाप्यलोकानां ज्ञानोपायस्त्वया परः । चिन्त्यतां कोऽपि तच्छ्रुत्वा स पर्याकुलतामगात् ॥ ११३ ॥ इयम माननीयास्ति कर्म्मभूमिपतेरपि । अचिन्त्यशक्तिसम्पन्ना भवत्ती भवितव्यता ॥ ११४ ॥ शक्रचक्रपर्यायकाप्रा महीपाः सोऽपि पूज्याः । मद्वाक्यमेवास्याः समीहन्ते सदैव हि ॥ ११५ ॥ तदेव कथ्ये सा तु प्रतिभाति

१ ०योपि० ख।

यदात्मनः । विधत्तेऽन्यस्य नापेक्षामुत्तमस्याधमस्य वा[1] ॥ ११६ ॥ भर्त्ताहमपि तस्याश्च भयसम्भ्रान्तमानसः । विदधानस्तदादेशं वर्त्ते कर्म्मकरोपमः ॥ ११७ ॥ पर्याकुलस्य तस्याथ बलाध्यक्षस्य चेतसि । स्फुरितं किं मयाज्ञेन चिन्तयात्मा विडम्ब्यते ॥ ११८ ॥ प्रस्थापनीयलोकानां स्वरूपं भवितव्यता । संसारिजीवपत्नी यद्वेत्ति सा पृच्छ्यते ततः ॥ ११९ ॥ एवं विचिन्त्य तेनाथ स्वाभिप्राये निवेदिते । तीव्रमोहः समाह्वास्त मुदितो भवितव्यताम् ॥ १२० ॥ आगतां च निवेश्योच्चैरासने सचिवेरितः । बलाध्यक्षः समस्तं तं वृत्तान्तं तामजिज्ञपत् ॥ १२१ ॥ हसित्वा साथ तं प्रोचे किमिदं गदितं त्वया । एवंविधेषु कार्येषु स्वयमेवोद्यतास्मि यत् ॥ १२२ ॥ मद्भर्त्ता तावदेकोऽयं तज्जातीयास्तथा परे । प्रेष्यन्ते तत्र सोऽवोचत्तदपि त्वं विधास्यसि ॥ १२३ ॥ अथागत्य निवेद्यैतच्चालितोऽहं तया बलात् । तन्नियोगोक्तसंख्यानुसारतोऽन्येऽपि कत्यपि ॥ १२४ ॥ महत्तमबलाध्यक्षावुदितौ च पुनस्तया । मया युवाभ्यां चामीभिः सह यातव्यमध्वनि ॥ १२५ ॥ मया तावदयं नैव मोक्तव्यः पतिरात्मनः । पतिव्रतानां नारीणां पतिरेव हि देवता ॥ १२६ ॥ तथैकाक्षनिवासाख्ये नगरे प्रथमं खलु । अमीभिरस्ति गन्तव्यमधीनं युवयोश्च तत् ॥ १२७ ॥ ताभ्यामथ तथेत्युक्ते ते सर्वे तत्पुरं ययुः । तस्मिंश्च नगरे सन्ति महान्तः पञ्च पाटकाः ॥ १२८ ॥ एकं पाटकमङ्गुल्या दर्शयन्नग्रतः स्थितम् । मा[2]मेवमथ तन्वङ्गि ! तीव्रमोहोदयोऽब्रवीत् ॥ १२९ ॥ त्वमत्र पाटके भद्र ! तिष्ठ विश्वस्तमानसः । पाश्चात्यपुरतुल्यत्वाद्ध्यध्येष धृतिदस्तव

१ च ग० । २ ममैव० क० ख० घ० ।

॥ १३० ॥ यथाहि तत्र प्रासादगर्भागारस्थिता जनाः । सन्त्यनन्ताः पिण्डिताङ्गास्तथैवात्रापि पाटके
॥ १३१ ॥ पर्यन्ते किन्तु ते लोकव्यवहारपराङ्मुखाः । मनीषिभिः समाख्यातास्तेनासांव्यवहारिकाः ॥ १३२ ॥
समागमादिकं लोकव्यवहारममी पुनः । कुर्वन्ति सर्वदा तेन प्रोक्ताः सांव्यवहारिकाः ॥ १३३ ॥ अनादिवनस्पतय
इति तेषां समाभिधा । एषां तु वनस्पतय इति भेदस्तथा परः ॥ १३४ ॥ प्रत्येकचारिणोऽप्यत्र विभिन्नाः सौम्य !
पाटके । सोपापवरकन्यायसङ्गताः सन्त्यसंख्यकाः ॥ १३५ ॥ ततोऽत्र भद्र ! तिष्ठ त्वमित्युक्त्वो तेन पूर्ववत् ।
एकस्मिन्नपवरके स्थापितोऽहं सुलोचने ! ॥ १३६ ॥ केचित्तत्सन्निधौ केचिन्मुत्कलेषु च कचन । पाटकस्यापरेष्वेव
देशेषु स्थापिता जनाः ॥ १३७ ॥ साधारणशरीराख्ये गर्भागारे ततो मया । कालो निर्वाहितोऽनन्तं पूर्वं
स्थित्यैव सुन्दरि ! ॥ १३८ ॥ अथापवरकात् तस्मात्कृष्टा मां भवितव्यता । असंख्यं धारयामास काले प्रत्येकचारिषु
॥ १३९ ॥ इतश्च कर्मनृपतिर्लोकस्थित्याज्ञिकं निजम् । कुटुम्बं सर्वमालोच्य स्वसामर्थ्यमयाणुभिः ॥ १४० ॥
एकभवेद्यसंज्ञाः सर्वावस्थाक्षमाः । अनन्ता गुटिकाः कृत्वा पुराह भवितव्यताम् ॥ १४१ ॥ युग्मम् ॥
भ्रान्त्यात्यखिललोकानां विदधाना क्षणे क्षणे । सुखदुःखादिकार्याणि नानारूपाणि सुन्दरि ! ॥ १४२ ॥
गुटिकास्तव गृह्णीता एकैकस्याथ देहिनः । जीर्णायां पूर्वदत्तायां दातव्या गुटिकापरा ॥ १४३ ॥ ततस्ताः
सर्वसत्त्वेषु स्वशरीर प्रयोजनम् । स्वयमेव करिष्यन्ति न भावी ते ततः श्रमः ॥ १४४ ॥ इत्युदित्वा नृपस्तस्यै

१ सामान्याभिधानम् । २ ०स्त्याऽनेन द० प्र० । ३ आत्मीयसामर्थ्यप्रभवपरमाणुभिः ।

गुटिकास्ताः [1]समर्पयत् । महाप्रसाद इत्युक्त्वा सापि प्रमुदितागृहीत् ॥ १४५ ॥ विधत्ते च समस्तेषु शरीरिषु
[2]तथैव सा । प्रयोगं सर्वदा तासां गुटिकानां निजेच्छया ॥ १४६ ॥ ततश्चाहं यदा तत्राव्यवहारपुरेऽभवम् । गुटिका-
स्तास्तदायच्छत् तया स्थित्या ममापि सा ॥ १४७ ॥ एकाकारं तथा सूक्ष्मं तत्प्रयोगेण किन्तु सा । रूपं मे
विहितवती चित्रं तत्रागता पुनः ॥ १४८ ॥ येतोऽपर्याप्तपर्याप्तस्थूलसूक्ष्माकृतिः क्वचित् । क्वचिदपवरकस्थः
क्वचित्प्रत्येक[3]चार्यपि ॥ १४९ ॥ कन्दमूलत्वगङ्कूरस्कन्धशाखाचरः क्वचित् । पत्रपुष्पफलाकारः क्वचिद् बीजगतः
क्वचित् ॥ १५० ॥ मूलबीजस्कन्धबीजाग्रबीजाद्यात्मकः क्वचित् । क्वचिद् वृक्षलतागुल्महरितौषधिरूपभाक् ॥१५१॥
इत्याद्यनेकरूपोऽहं भवितव्यतया तथा । विहितः पाटके तत्र वर्त्तमानो मुहुर्मुहुः ॥ १५२ ॥ कलापकम् ॥
तथारूपं च संवीक्ष्य पुरान्तरनिवासिनः । समभ्येत्य जनाः क्रूरा मत्पत्न्याः पुर एव माम् ॥ १५३ ॥ नित्यं
छिन्दन्ति भिन्दन्ति पिंषन्ति च दलन्ति च । मोटयन्ति च [4]लुञ्चन्ति तक्ष्णुवन्ति [5]दहन्ति च ॥ १५४ ॥ युग्मम् ।
दृष्ट्वाप्येवं बाध्यमानं मत्पत्नी मामुपेक्षते । तत्रैवं दुःखिनानन्तो गमितः समयो मया ॥ १५५ ॥ गुटिकाया-
मथान्त्यायां जीर्णायामन्यदानघे ! । भवितव्यतया दत्ता ममान्या गुटिका पुनः ॥ १५६ ॥ तत्प्रभावाद् जगा-
माहं द्वितीये पाटके क्षणात् । तत्रासंख्याः पार्थिवाख्याः संवसन्ति जनाः सदा ॥ १५७ ॥ तेषां मध्ये समु-
द्भूतस्ततोऽहमपि [6]पार्थिवः । अन्यान्यगुटिकादानात्तत्रापि नटितस्तया ॥ १५८ ॥ पर्याप्तकापर्याप्तकसूक्ष्मस्थू-

१ समार्पयत् ग० । २ तथाद्यप० क० ख० ग० घ० । ३ ०धार्यपि ग० । ४ लुण्ठन्ति ता० । ५ निहन्ति ग० । ६ पृथ्वीकायिकः ।

लादिरूपिना । पादूपलादिसंघेन चर्मपत्रकवाङ्मुखा ॥ १५९ ॥ भेदनिर्दलनादीनि मया दुःखानि पातक । सोढानि वसता तत्रासंख्य कालं सुलोचने ! ॥ १६० ॥ युग्मम् ॥ गुटिका मम दत्तान्या भवितव्यतया ततः । तृतीये पातके तूर्णं तत्रमामादहं ययौ ॥ १६१ ॥ निवसन्त्याप्यनाभानस्तत्रासंख्याः कुटुम्बिनः । ततो ममापि तन्म ध्य प्रादुर्भूताप्यरूपता ॥ १६२ ॥ अन्यान्यगुटिकायोगात्तत्र च मम गेहिनी । हिमावश्यायमहिकादीनि रूपाण्यनेकधा ॥ १६३ ॥ शीतोष्णाचमनक्षारक्षेपादीनि मया मुहुः । तितिक्षितानि दुःखानि काल तत्राप्य संख्यकम् ॥ १६४ ॥ भार्यादत्तान्यगुटिकायोगतोऽहं गतस्ततः । तुरीये पातकेऽसंख्यतेजस्कायपरिप्लुते ॥१६५॥ तन्मध्ये पचिकारूपो भास्वरो दहनात्मकः । ततोऽहमपि सम्पन्नस्तेजस्कायाभिधो द्विजः ॥ १६६ ॥ सर्वप्रकार पचकान्यालालावादिसंज्ञया । तत्रापि नटितः पत्न्या गुटिकानां प्रदानतः ॥ १६७ ॥ मम विध्यापनादीनि संभावितानि च भूरिशः । भद्रे ! दुःखानि तत्रापि संख्यातीतमनेहसम् ॥१६८॥ पत्नीदत्तान्यगुटिकायोगाद् यातोऽथ पञ्चमे । पातके वायवीयाख्यासंख्यातक्षत्रियाश्रिते ॥ १६९ ॥ व्यजनाकारोऽनुष्णशीतमालस्यमर्मचक्षुषाम् । तन्मध्ये वायवीयाख्योऽहमपि क्षत्रियोऽभवम् ॥ १७० ॥ संवर्तगुञ्जाझम्झादिरूपैस्तत्रापि भार्यया । गुटिकासंप्रयोगेण भूयो भूयः कदर्थितः ॥ १७१ ॥ व्यजनपावनिरोधाद्यैर्मया दुःखमनेकधा । तितिक्षितमसंख्येय कालं तत्रापि सुन्दरि ! ॥ १७२ ॥ अथान्यगुटिकादानात् प्रथमे पातके पुनः । भवितव्यतया नीतः पूर्वस्मिस्त्येव च स्थितः ॥

१ •माख्यो मांसच• ह० लि० ग० प० ।

॥ १७३ ॥ अन्यान्यगुटिकायोगादहं नीतस्ततस्तया । पाटकेषु द्वितीयादिष्वपि भूयोऽपि पूर्ववत् ॥ १७४ ॥ एवं
मन्त्रिबलाध्यक्षसमक्षं भवितव्यता । पर्याट्यानन्तशस्तत्र पुरे किञ्चित्प्रसेदुषी ॥ १७५ ॥ मामन्यदावदं[1]न्नाथ !
त्वमत्रास्थाश्चिरं ततः । स्थानाजीर्णापनोदाय नयामि त्वां पुरान्तरे ॥ १७६ ॥ युग्मम् ॥ यदाज्ञापयते देवीत्यु-
दित्वाथ मयि स्थिते । सा मेऽन्यपुरयानाय गुटिकामपरां ददौ ॥ १७७ ॥ विकलाक्षनिवासाख्यमितश्चास्त्यपरं
पुरम् । विकटाः पाटकाः सुभ्रु ! विद्यन्ते तत्र च त्रयः ॥ १७८ ॥ तत्रोन्मार्गोपदेशाख्यो नियुक्तं[2]: कर्मभूभुजा ।
महत्तमः समस्त्यस्य मायेति विदिता प्रिया ॥ १७९ ॥ गतोऽहं गुटिकायोगात् तत्र प्रथमपाटके । संख्यातीतद्विहृषी-
ककुलपुत्रकसंकुले ॥ १८० ॥ ततो ममापि तन्मध्ये जातस्यापगता क्षणात् । सा प्रसुप्तोदिकावस्था मनाग् जाता
च चेतना ॥ १८१ ॥ रूपैर्जलूकागण्डोलकृमिपूतरकादिभिः । अन्यान्यगुटिकायोगात्तया तत्रापि नाटितः ॥१८२॥
शीतोष्णकर्त्तनाहारमर्दनास्फालनादिकम् । मया दुःखं च संख्येयं कालं तत्र तितिक्षितम् ॥ १८३ ॥ द्वितीये
पाटके नीतो गुटिकातस्तयान्यदा । गृहिणः सन्त्यसंख्यातास्तत्र त्रिकरणाभिधाः ॥१८४॥ जातोऽगृहीतसङ्के[3]ते ! तेषां
मध्येऽहमप्यथ । कुन्थुमत्कुणमत्कोटकीटयूकादिरूपभाक् ॥१८५ ॥ अन्यान्यगुटिकादानात् कुटुम्बिन्या विडम्बितः ।
कालं तत्रापि संख्येयं दुःखं सेहे च पूर्ववत् ॥ १८६ ॥ तृतीयं पाटकं नीतो गुटिकातस्ततस्तया । असंख्यास्तत्र
विद्यन्ते चतुरक्षाः कुटुम्बिनः ॥ १८७ ॥ ततो जातेन तन्मध्ये मया रम्भोरु ! पूर्ववत् । पतङ्गभृङ्गखद्योतदंशा-

१ ०दत् साथ ख । २ ०क्तो मूलभू० क० ख० ग० घ० । ३ ०सङ्गके ग० ।

पाशापारिना ॥ १८८ ॥ अन्यान्यगुटिकायोगाद्यन्वितन च मार्यया । कालं संख्यामितं नानारूप दुःखं विति
विमम् ॥ १८९ ॥ युग्मम् ॥ एवं नवमरूपाणि संख्यातानि पुनः पुनः । पर्याप्य पाग्रूपेषु मानुषे भवित
व्यता ॥ १९० ॥ आपयुत्र भरन्त किं नयामि नगरान्तरम् । पुरेऽत्र ते स्थितिर्नास्ति नियत नित्यवासतः ॥ १९१॥
मयाक्त इति । पत् तुभ्य शोपन तद्विधीयताम् । ततोऽन्यपुरयानाय दत्ता मे गुटिका तया ॥ १९२ ॥ अयो मार्गो
परेऽव्यामंगपरम्पाक्षमङ्कनम् । पञ्चायपत्नुसंस्थान नामास्ति नगरं परम् ॥ १९३ ॥ पञ्चाक्षास्तत्र ये लोकाः स्पष्ट
चेत पमंयुताः । भग्निनस्तऽभिधीयन्ते गमज्ञाथ मनीषिभिः ॥ १९४ ॥ ये पुनस्तत्र विद्यन्ते स्पष्टचैत पवर्जिताः ।
असंज्ञिन इति गपानास्ते संमूर्छनजास्तथा ॥ १९५ ॥ ततः कर्कटकग्राहमेकप्रभृतिरूपभृत् । अजगरमारद्वोरग
प्रमुखरूपमाक् ॥ १९६ ॥ हरिकोकणकोलूकपिकद्विकजुकाकृतिः । एष जलस्थलनभश्चरो जातस्तदन्तरे ॥१९७॥
असंज्ञिसंज्ञिरपञ्चिनरनदेसपार्दितः । संख्यातिगानि दुःखानि विविधानाय पूर्ववत् ॥ १९८ ॥ विशेषकम् ॥
पामान्यमनुष्यानपु पन्ना नीतोऽन्तरान्तरा । असंख्याता पञ्चातानि संमोशानि तथैव च ॥ १९९ ॥
स्थित्वा नैरन्तर्येण परं पल्योपमत्रयम् । अह तत्र पुरे किंचित् माधिक पूर्वकोटिभिः ॥ २०० ॥ अन्यदा गुटिका
दानाद्ध पञ्च मया मृग । वायन गीतलुब्धश्च लुब्धकेन निपातितः ॥ २०१ ॥ मत्रान्तरे च पूर्वस्या जीर्णाया
भविनव्यता । दत्तो म गुटिकामन्यां तद्गताय गतोऽमवम् ॥ २०२ ॥ कालक्रमेण मज्ञातो बलवान् यूथनायकः ।
करणुनिकरेणाहं महिलो व्यचरं वन ॥ २०३ ॥ अन्यदा विपिने तत्र प्रादुर्भूते दवानले । कान्दिशीकमह यूथ

तद्विहाय पलायितः ॥ २०४ ॥ ततश्चिरन्तनग्रामपद्रशुष्कान्धकूपके। तटरूढतृणालक्ष्येऽग्रपादौ पतितौ मम ॥ २०५ ॥ पश्चाद्भागोऽपि पर्यस्तो निरालम्बतया ततः। पतितोऽहं समुत्तानस्तनुभारेण चूर्णितः ॥ २०६ ॥ मूर्च्छान्ते चेतनां प्राप्य प्रोद्भूतप्रबलव्यथः। सञ्जातपश्चात्तापोऽहमिति चेतस्यचिन्तयम् ॥ २०७ ॥ हितमापद्गतं पोष्यं संस्तुतं चोपकारकम्। आत्मवर्गं परित्यज्य नश्यन्त्यात्मभयेन ये ॥ २०८ ॥ तेषामह्रीमतां यूथाधिपशब्दभृतां वृथा। मादृशानां कृतघ्नानामेतदेव हि युज्यते ॥ २०९ ॥ युग्मम् ॥ ततोऽनया भावनया मनाग्माध्यस्थ्यमालिना। सप्तरात्रं मया सोढा तदवस्थेन सा व्यथा ॥ २१० ॥ अत्रान्तरे च कमपि प्रादुष्कृत्य मनोहरम्। पुमांसमेकं सा सुभ्रु! मामूचे भवितव्यता ॥ २११ ॥ तुष्टाहं चेष्टितेनोच्चैरार्यपुत्र! तवामुना। अतो गच्छाधुना रम्ये नगरे त्वं जयस्थले ॥ २१२ ॥ अयं च प्रददे तुभ्यं मया पुण्योदयो यतः। प्रच्छन्नस्तव सोदर्यः सहचारी च भाव्यसौ ॥ २१३ ॥ देव्याः प्रमाणमादेश इति प्रोक्ते मया ततः। सा मे तत्र प्रयाणाय गुटिकामपरां ददौ ॥ २१४ ॥ वदत्येवं च संसारिजीवाख्ये तस्करे तदा। स भव्यपुरुषः प्रज्ञाविशालामेवमब्रवीत् ॥ ॥ २१५ ॥ यथाम्ब! पुरुषः कोऽयं? किं वानेन प्रकथ्यते?। पुराणि कानि वामून्यव्यवहारादिकानि च? ॥ २१६ ॥ केयं च गुटिका चित्रसुखदुःखादिकारिणी?। स्थितिः कालमियन्तं च नरस्यैकस्य वा कथम्? ॥ २१७ ॥ जलूकादीनि रूपाणि स्युर्मनुष्यस्य वा कथम्?। तदम्ब! कथ्यतामस्य भावार्थो मे परिस्फुटः ॥ २१८ ॥ ततः प्रज्ञाविशालाह रूपं यदिदमीक्ष्यते। अस्येदानीन्तनं वत्स! तन्नानेन निवेदितम् ॥ २१९ ॥ संसारिजीवनामायं

किन्तु सामान्यरूपतः । पुरुषोऽप्यसद्देशारमनामानेन प्रकाशितम् ॥ २२० ॥ भास्मनश्चरितं सर्वमिदं च घटमानकम् । निवेदयितुमारब्धमनेन कमलानन ! ॥ २२१ ॥ यथाऽसंव्यवहाराख्यो जीवानां राशिरत्र यः । तद्संव्यवहाराख्यं नगरं तात ! कथ्यते ॥ २२२ ॥ पद्मानामपि पृथ्व्यम्बुप्रसूतीनां च सुन्दर ! एकेन्द्रियाणामेकाक्षनिवासं पुरमुच्यते ॥ २२३ ॥ द्वित्रिचतुरिन्द्रियाणां विकलाक्षं पुरं पुनः । पञ्चेन्द्रियतिरश्चां तु पञ्चाक्षपशुसंस्थितिः ॥ २२४ ॥ एकभववेदनीयं कर्मचात्राभिधीयते । गुटिकैकभववेद्या सुखदुःखादिकारणम् ॥ २२५ ॥ अथ च पुरुषो यस्य ! सर्वदाप्यजरामरः । अनन्तमध्यतः कालमस्य युक्तैव हि स्थितिः ॥ २२६ ॥ भवन्त्येव हि संसारिजीवस्य विविधानि च । चक्रकादीनि रूपाणि भद्र ! चित्रं किमत्र तत् ! ॥ २२७ ॥ यच्चा जगति नास्त्येव यस्य ! तत्सर्वविधानकम् । घटस्य नैव संसारिजीवस्य घटते स्फुटम् ॥ २२८ ॥ मुग्धबुद्धिस्त्वमद्यापि स्वरूपं यस्य ! वेत्सि न । एतस्य कथयस्वेष तथाप्यचरितं निजम् ॥ २२९ ॥ पश्चादस्य भावार्थं कथयिष्यामि सुस्थिता । ततः सोऽपि तथादेशं तथेति प्रत्यपद्यत ॥ २३० ॥ इति ननु समवैषि मुग्धमन्या ! घनतरकर्मवशं गतस्य जन्तोः । भ्रमणमवितथं गतो तिरश्चां भ्रमुत भवात्ययुना पुनर्नराणाम् ॥ २३१ ॥

इति श्रीश्रीचन्द्रसूरिशिष्यश्रीदेवेन्द्रसूरिविरचिते उपमितिभवप्रपञ्चाकथासारोद्धारे तिर्यग्भवभ्रमणवर्णनो नाम द्वितीयप्रस्तावः ।

१ घटनात्मकम् म०

# तृतीयः प्रस्तावः।

प्रोचे संसारिजीवोऽथ गुटिकायाः प्रभावतः। तस्या यत्राहमुत्पेदे तदाकर्णय सुन्दरि ! ॥ १ ॥ अस्त्यस्यां
मनुजगतौ पाटको भरताभिधः। तद्विशेषकभूतं च पुरं नाम्ना जयस्थलम् ॥ २ ॥ [1]ज्योत्स्न्यां सौधेषु सावर्ण्या-
ल(ल्ल)क्ष्येष्वाभाति सुभ्रुवाम्। आरूढानां मुखैर्यत्र शतचन्द्रं नभस्तलम् ॥ ३ ॥ दुर्वारवैरिवनितामुखपद्महिमागमः।
तत्र पद्म इति ख्यातः समभूदवनीपतिः ॥४॥ अपूर्वः कोऽप्यभूद् यस्य प्रतापवडवानलः। यः शीतांशुरिवात्यन्तं
यशोऽर्णवमवर्द्धयत् ॥ ५ ॥ शचीव देवराजस्य लक्ष्मीरिव मुरद्विषः। तस्याभूज्जनितामन्दानन्दा नन्दाभिधा
प्रिया ॥ ६ ॥ अथाहं प्राविशं सुभ्रु ! भवितव्यतयेरितः। नन्दाया उदरे तस्याः समये च विनिर्ययौ ॥ ७ ॥
जातोऽस्माकमयं सूनुरिति मिथ्याभिमानतः। कारयामासतुर्देवीनृपौ जन्मोत्सवं मम ॥८॥ सहजातोऽपि नादर्शि
ताभ्यां पुण्योदयः स[2] तु। अन्तरङ्गा हि नो भावा गोचरश्चर्मचक्षुषाम् ॥ ९ ॥ नन्दिवर्द्धन इत्याख्यां दधानः
पितृकल्पिताम्। धात्रिभिः पाल्यमानोऽथ क्रमादहमवर्द्धिषि[3] ॥ १० ॥ इतश्चासंव्यवहारपुरादारभ्य वर्त्तते। द्विविधो
मे परीवारो बाह्याभ्यन्तरभेदतः ॥ ११ ॥ तत्रान्तरपरीवारमध्ये मेऽस्त्यविवेकिता। धात्री ब्राह्मणजातीया
सर्वानर्थनिबन्धनम् ॥१२॥ मज्जन्मदिवसे सापि सुतं वैश्वानराभिधम्। सुषुवे सोऽप्यवर्द्धिष्ट सममेव मया क्रमात्

१ सौधेषु ज्योत्स्ना सावर्ण्याल्लक्ष्येष्वा० ग०। २ सुतः ग०। ३ ०वर्द्धिषम् ग०।

किन्तु सामान्यरूपतः । पुरुषोऽस्त्यत्रैवात्मनामानेन प्रकाशितम् ॥ २२० ॥ आत्मनश्चरितं सर्वमिदं च चेष्टमा नकम् । निवेदयितुमारब्धमनेन कमलानन ! ॥ २२१ ॥ तथाऽसंव्यवहाराणां जीवानां राशिरत्र यः । तद् संव्यवहाराख्यं नगरं तात ! कथ्यते ॥ २२२ ॥ पञ्चानामपि पृथ्व्यम्बुप्रभृतीनां च सुन्दर ! एकेन्द्रियाणामेकाक्षनिवासं प्रकल्प्यते ॥ २२३ ॥ द्वित्रिचतुरिन्द्रियाणां विकलाक्षं पुरं पुनः । पञ्चेन्द्रियतिरश्चां तु पञ्चाक्षपशुसंस्थितिः ॥ २२४ ॥ एकभववेदनीयं कर्मात्रभिहोच्यते । गुटिकैकभववेद्या सुखदुःखादिकारणम् ॥ २२५ ॥ अथ च पुरुषो वत्स । सर्वदाप्यजरामरः । अनन्तमप्यतः कालमस्य पुरेषु हि स्थितिः ॥ २२६ ॥ भवन्त्येव हि संसारिजीवस्य विविधानि च । अब्दकादीनि रूपाणि भद्र ! चित्रं किमत्र तत् ? ॥ २२७ ॥ यद्वा जगति नास्त्येव वत्स ! तत्संविधानकम् । यदस्य नैव संसारिजीवस्य घटते स्फुटम् ॥ २२८ ॥ मुग्धबुद्धिस्त्वमद्यापि सरूप वत्स ! वेत्सि न । एतस्य रूपयत्येष तवात्मचरितं निजम् ॥ २२९ ॥ पश्चाच्चास्य भावार्थं कथयिष्यामि सुस्थिता । ततः सोऽपि तदादेश तथेति प्रत्यपद्यत ॥ २३० ॥ इति ननु समवसि मुग्धमत्या ! घनतरकर्मवशं गतस्य जन्तोः । भ्रमणमवितथं गतौ तिरश्चां शृणु गतावधुना पुनर्नराणाम् ॥ २३१ ॥

इति श्रीचन्द्रसूरिशिष्यश्रीदेवेन्द्रसूरिविरचिते उपमितिभवप्रपञ्चाकथासारोद्धारे तिर्यग्भवभ्रमणवर्णनो नाम द्वितीयप्रस्तावः ।

---

१ घटनात्मकम् ग०

# तृतीयः प्रस्तावः ।



प्रोचे संसारिजीवोऽथ गुटिकायाः प्रभावतः । तस्या यत्राहमुत्पेदे तदाकर्णय सुन्दरि ! ॥ १ ॥ अस्त्यस्यां मनुजगतौ पाटको भरताभिधः । तद्विशेषकभूतं च पुरं नाम्ना जयस्थलम् ॥ २ ॥ [1]ज्योत्स्न्यां सौधेषु सावर्ण्याल(ल्ल)क्ष्येष्वाभाति सुभ्रुवाम् । आरूढानां मुखैर्यत्र शतचन्द्रं नभस्तलम् ॥ ३ ॥ दुर्वारवैरिवनितामुखपद्महिमागमः । तत्र पद्म इति ख्यातः समभूदवनीपतिः ॥४॥ अपूर्वः कोऽप्यभूद् यस्य प्रतापवडवानलः । यः शीतांशुरिवात्यन्तं यशोऽर्णवमवर्द्धयत् ॥ ५ ॥ शचीव देवराजस्य लक्ष्मीरिव मुरद्विषः । तस्याभूज्जनितामन्दानन्दा नन्दाभिधा प्रिया ॥ ६ ॥ अथाहं प्राविशं सुभ्रु ! भवितव्यतयेरितः । नन्दाया उदरे तस्याः समये च विनिर्ययौ ॥ ७ ॥ जातोऽस्माकमयं सूनुरिति मिथ्याभिमानतः । कारयामासतुर्देवीनृपौ जन्मोत्सवं मम ॥८॥ सहजातोऽपि नादर्शि ताभ्यां पुण्योदयः स[2] तु । अन्तरङ्गा हि नो भावा गोचरश्चर्म्मचक्षुषाम् ॥ ९ ॥ नन्दिवर्द्धन इत्याख्यां दधानः पितृकल्पिताम् । धात्रिभिः पाल्यमानोऽथ क्रमादहमव[3]र्द्धिषि ॥ १० ॥ इतश्चासंव्यवहारपुरादारभ्य वर्त्तते । द्विविधो मे परीवारो बाह्याभ्यन्तरभेदतः ॥ ११ ॥ तत्रान्तरपरीवारमध्ये मेऽस्त्यविवेकिता । धात्री ब्राह्मणजातीया सर्वानर्थनिबन्धनम् ॥१२॥ मज्जन्मदिवसे सापि सुतं वैश्वानराभिधम् । सुषुवे सोऽप्यवर्द्धिष्ट सममेव मया क्रमात्

१ सौधेषु ज्योत्स्ना सावर्ण्यालक्ष्येष्वा० ग० । २ सुतः ग० । ३ ०वर्द्धिषम् ग० ।

॥ १३ ॥ घातयन् वैरकलहाभिधानौ विषमौ पदौ । ईर्ष्यासूयाभिधे बाहू स्थूलहस्ते समुद्वहन् ॥ १४ ॥ ऊरू
हेस्तौ दधदनुशयानुपशमाभिधौ । पैशुन्यसंज्ञकं चित्रस्फुटिलं च कटितटम् ॥१५॥ परमर्मोद्घटनाख्यं दधदप्युदरं
गुरुम् । अपानमार्गसद्गीर्णमुरोऽन्यस्थापनामकम् ॥१६॥ ह्रस्वौ च कलयन्बाहू धारमत्सरसंज्ञिकौ । चित्राणां क्रूरता-
रूपां सुदीर्घां च शिरोधराम् ॥ १७ ॥ असभ्यभाषणाख्यास्यैर्विषमैर्दशनैर्युतः । चञ्चस्वासहनत्वाख्यौ कर्णावल्पतरौ
वहन् ॥१८॥ चिभ्रत् वामसमाख्यस्यं चिपिटं नैर्घृण्यं तथा । रक्ते दृशे नृशंसत्वरौद्रत्वाख्ये दृशौ दधत् ॥१९॥ शुक्लो
मूर्ध्ना त्रिकोपेनानार्याचरणसंज्ञिना । केशभारेण पिङ्गस्याक्षपालाख्यालानुहारिणा ॥ २० ॥ परोपतापसंज्ञेन कुर्वन् स्व
नाम सार्थकम् । ततोऽसौ मायणीयनुरन्यदा ददृशे मया ॥२१॥ षड्भिः कुलकम् ॥ दृष्ट्वा च प्रादुरभवद्वैरिण्यपि हि
वस्ततः । मम गेहास्नोरिवापथ्ये प्रीतिस्वभावनीयसी ॥ २२ ॥ ज्ञात्वाथ सोऽपि मद्भावं समागत्य च सत्वरम् ।
मां हर्षात् समालिङ्गमाटपन् स्नेहमद्भुतम् ॥ २३ ॥ नत्सर्गोऽसंपन्न्योन्यमावयोर्विरहासहा । अतिमात्रमभूत् मैत्री
क्रमाच्च कमलेक्षणे । ॥२४॥ अथान्यदामुना मैत्रीं कुर्वन्तमभिवीक्ष्य माम् । रुष्टः पुण्योदयो मित्र चेतस्येवमचिन्त
यत् ॥ २५ ॥ अहो ! मूर्खः कुमारोऽयं हितं मित्रं विहाय माम् । वैश्वानरेण यन्मैत्री कुरुते विद्विषामुना ॥२६॥
तत्किं निवारयाम्येनमथवा वारितोऽप्यसौ । मित्र न त्यक्ष्यति क्रूरं कलङ्कमिव चन्द्रमाः ॥ २७ ॥ तत्किं परि

१ ह्रस्वे ता० क० ग० घ० । २ ०भिधे ता० क० ग० घ० । ३ ह्रस्वे ता० क० ग० घ० । ४ ०रसंज्ञिके ता०
क० ग० घ । ५ मसभ्यभा० क० स० ग० घ० । ६ नासिकम् । ७ रोगिणः ।

त्यजाम्येनं न ह्येतदपि साम्प्रतम् । भवितव्यतयैतस्यादिष्टः सहचरोऽस्मि यत् ॥२८॥ वेदनासमुद्घातेऽपि स्थिरमध्यस्थभावतः । तोषितोऽहमनेनापि पुरा द्विरदरूपिणा ॥ २९ ॥ तदकाण्डे न मे त्यक्तुं कुसङ्गोऽप्येष युज्यते । ध्यात्वेति स तथैवास्थात् मत्समीपे महामनाः ॥ ३० ॥ इतः संजज्ञिरे बाह्या वयस्या बहवो मम । ततो विचित्रक्रीडाभिस्तैः क्रीडामि निजेच्छया ॥ ३१ ॥ बलिनोऽपि महान्तोऽपि ते च क्षत्रसुता अपि । वैश्वानरयुतं सर्प्पमिव मां वीक्ष्य बिभ्यति ॥ ३२ ॥ प्रणतिं चाटुकर्म्माणि धावनं पुरतोऽपि च । पदातय इवाजस्रं ततः कुर्वन्ति ते मम ॥ ३३ ॥ तत्र पुण्योदयो हेतुरचिन्त्यमहिमाश्रयः । शक्तिर्वैश्वानरस्येयमिति चित्ते त्वभून्मम ॥ ३४ ॥ एवं भावनया तन्वि ! तत्र वैश्वानरेऽन्वहम् । दधानो द्विगुणां प्रीतिमहं जातोऽष्टवार्षिकः ॥ ३५ ॥ अथ मामर्प्पयत्तातो महोत्सवपुरस्सरम् । कलाचार्याय वर्येऽह्नि कलाग्रहणहेतवे ॥ ३६ ॥ ततोऽहमग्रेऽधीयाननिजभ्रात्रादिभिः सह । तत्समीपे प्रववृते ग्रहीतुं सकलाः कलाः ॥ ३७ ॥ जज्ञे पुण्योदयेनानुकूलवातेन नुन्नया । कलाजलधिपारीणो मतिनावाचिराय च ॥ ३८ ॥ किन्तु विसार्य शास्त्रार्थं वैश्वानरविमोहितः । अकार्षं[1] कलहं भद्रे ! सहाध्यायिभिरन्वहम्[2] ॥ ३९ ॥ मर्म्मोद्घट्टनमश्लीलभाषणं ताडनं तथा । कुर्वे तेषां क्षमे नापि मध्यस्थमपि तद्वचः ॥ ४० ॥ विदधानाः कलाभ्यासं मातापित्रनुरोधतः । ते तु कालं नयन्ति स्म मयकोद्वेजिता अपि ॥४१॥ माभूदनर्थः सर्वेषामिति बुद्ध्या च ते बुधाः । मद्वृत्तं कथयन्ति स्म कलाचार्यस्य नैव तत् ॥ ४२ ॥ तथापि नित्य-

१ ०मार्प्पं० ग० ता०। २ सदाध्या० क० ख० घ० ।

॥ १३ ॥ धारयन् वैरकलहाभिधानौ विषमौ पदौ । ईर्ष्यासूयाभिधे सक्थे स्थूलह्रस्वे समुद्वहन् ॥ १४ ॥ ऊरू हेस्रौ दधदनुशयानुपशमाभिधौ । पैशुन्यसंज्ञकं निम्नत्कुटिलं च कटितटम् ॥१५॥ परमर्मोद्घटनाख्यं दर्शयन्नुदरं गुरुम् । अपमानमहिमसङ्कीर्णमुरोऽन्तस्तापनामकम् ॥१६॥ ह्रस्वौ च कलयन्बाहू धारमत्सरसंज्ञितौ । बिभ्राणः क्रूरता-रूपां सुदीर्घां च शिरोधराम् ॥ १७ ॥ असभ्यभाषणाद्यास्यैर्विषमैर्दशनैर्युतः । चण्डत्वासहनत्वाख्यौ कर्णावल्पतरौ वहन् ॥१८॥ बिभ्रत् तामसताख्यं चिपिटं नैर्घृण्टं तथा । रक्ते भ्रुवे नृशंसत्वरौद्रत्वाख्ये दृशौ दधत् ॥१९॥ युक्तो मूर्ध्नो त्रिकोणेनानार्याचरणसंज्ञिना । केशभारेण पिङ्गत्वाख्यालावालानुकारिणा ॥ २० ॥ परोपतापसंज्ञेन कुर्वन् स्व नाम सार्थकम् । ततोऽसौ मायणीथपुरन्यदा ददृशे मया ॥२१॥ अष्टभिः कुलकम् ॥ दृष्ट्वा च प्रादुरभवद्वैरिण्यपि हि तस्मतः । मम स्नेहास्नोरिवापथ्ये प्रीतिस्तत्रातनीयसी ॥ २२ ॥ ज्ञात्वाथ सोऽपि मद्भाव समागत्य च सत्वरम् । मां सर्वाङ्गं समालिङ्गमाटयन् स्नेहमद्भुतम् ॥ २३ ॥ नखमांसवदन्योन्यमावयोर्विरहासहा । अतिमात्रममून्मैत्री क्रमाच्च कमलेक्षणे ! ॥ २४ ॥ अथान्यदामुना मैत्रीं कुर्वन्तमभिवीक्ष्य माम् । रुष्ट पुण्योदयो मित्र चेतस्येवमचिन्तयत् ॥ २५ ॥ अहो ! मूर्खः कुमारोऽयं हित मित्रं विहाय माम् । वैश्वानरेण यन्मैत्रीं कुरुते विधिनाऽमुना ॥२६॥ तत्कि निवारयाम्येनमथवा वारितोऽप्यसौ । मित्र न त्यक्ष्यति ध्रुवं कलङ्कमिव चन्द्रमाः ॥ २७ ॥ तत्किं परि

१ ह्रस्वे ता० क० ग० घ० । २ ०मिथे ता० क० ग० घ० । ३ ह्रस्वे ता० क० ग० घ० । ४ ०रसंमिते ता० क० घ० च । ५ असत्यमा० क० ख० ग० घ० । ६ नासिकाम् । ७ रोगिणः ।

त्यजाम्येनं न ह्येतदपि साम्प्रतम् । भवितव्यतयैतस्यादिष्टः सहचरोऽस्मि यत् ॥२८॥ वेदनासमुद्घातेऽपि स्थिरमध्यस्थभावतः । तोषितोऽहमनेनापि पुरा द्विरदरूपिणा ॥ २९ ॥ तदकाण्डे न मे त्यक्तुं कुसङ्गोऽप्येष युज्यते । ध्यात्वेति स तथैवास्थात् मत्समीपे महामनाः ॥ ३० ॥ इतः संजज्ञिरे बाह्या वयस्या बहवो मम । ततो विचित्रक्रीडाभिस्तैः क्रीडामि निजेच्छया ॥ ३१ ॥ बलिनोऽपि महान्तोऽपि ते च क्षत्रसुता अपि । वैश्वानरयुतं सर्प्पमिव मां वीक्ष्य बिभ्यति ॥ ३२ ॥ प्रणतिं चाटुकर्म्माणि धावनं पुरतोऽपि च । पदातय इवाजस्रं ततः कुर्वन्ति ते मम ॥ ३३ ॥ तत्र पुण्योदयो हेतुरचिन्त्यमहिमाश्रयः । शक्तिर्वैश्वानरस्येयमिति चित्ते त्वभून्मम ॥ ३४ ॥ एवं भावनया तन्वि ! तत्र वैश्वानरेऽन्वहम् । दधानो द्विगुणां प्रीतिमहं जातोऽष्टवार्षिकः ॥ ३५ ॥ अथ मामर्प्पयत्तातो[1] महोत्सवपुरस्सरम् । कलाचार्याय वर्येऽह्नि कलाग्रहणहेतवे ॥ ३६ ॥ ततोऽहमग्रेऽधीयाननिजभ्रात्रादिभिः सह । तत्समीपे प्रववृते ग्रहीतुं सकलाः कलाः ॥ ३७ ॥ जज्ञे पुण्योदयेनानुकूलवातेन नुन्नया । कलाजलधिपारीणो मतिनावाचिराय च ॥ ३८ ॥ किन्तु विसार्य शास्त्रार्थं वैश्वानरविमोहितः । अकार्षं कलहं भद्रे ! सहाध्यायिभिरन्वहम्[2] ॥ ३९ ॥ मर्म्मोद्घट्टनमश्लीलभाषणं ताडनं तथा । कुर्वे तेषां क्षमे नापि मध्यस्थमपि तद्वचः ॥ ४० ॥ विदधानाः कलाभ्यासं मातापित्रनुरोधतः । ते तु कालं नयन्ति स्म मयकोद्वेजिता अपि ॥४१॥ माभूदनर्थः सर्वेषामिति बुद्ध्या च ते बुधाः । मद्वृत्तं कथयन्ति स्म कलाचार्यस्य नैव तत् ॥ ४२ ॥ तथापि नित्य-

१ ०मार्प्प० ग० ता०। २ सदाध्या० क० ख ० घ० ।

॥ १३ ॥ धारयन् वैरकलहाभिधानौ विषमौ पदौ । ईर्ष्यासूयाभिधे जङ्घे स्थूलह्रस्वे समुद्वहन् ॥ १४ ॥ ऊरू हंसौ वधवञ्चनयानुपक्षमाभिधौ । पैशून्यसंज्ञकं चित्रसकुटिलं च कटितटम् ॥१५॥ परमर्मोद्घटनाख्यं दर्शयन्नुदरं गुल्मम् । दधानमतिसङ्कीर्णमुरोऽन्यत्तापनामकम् ॥१६॥ हंसौ च कलपन्माहु क्षारमत्सरसंज्ञिकौ । बिभ्राणः क्रूरतारूपां सुदीर्घां च शिरोधराम् ॥ १७ ॥ असभ्यभाषणाख्यैर्विषमैर्दशनैर्युतः । चण्डत्वासहनत्वाख्यौ कर्णावल्पसरौ वहन् ॥१८॥ बिभ्रत् तामसभावास्य चिपिट नैर्घृण्ट तथा । रक्ते दृशे नृशंसत्वरौद्रत्वाख्ये दधौ दधत् ॥१९॥ युक्तो मूर्ध्ना त्रिविक्षेपेनानार्याचरणसंज्ञिना । केशभारेण पिङ्गत्वाक्ष्यालामालानुकारिणा ॥ २० ॥ परोपतापसङ्गेन कुर्वन् स्व नाम सार्थकम् । ततोऽसौ प्राणिवधनुरन्यदा ददृशे मया ॥२१॥ त्रिभिः कुलकम् ॥ दृष्ट्वा च प्रादुरभवद्वैरिण्यपि हि तन्मतः । मम गैढास्नेहरिवापध्ये प्रीतिस्तत्रातिनीयसी ॥ २२ ॥ ज्ञात्वाथ सोऽपि मद्भाव समागत्य च सत्वरम् । मां सर्वाङ्गं समालिङ्ग्याटयन् स्नेहमद्भुतम् ॥ २३ ॥ नखमांसवदन्योन्यमावयोर्विरहासहा । अतिमात्रमभून्मैत्री क्रमाच्च कमलेक्षणे ! ॥२४॥ अथान्यदाधुना मैत्री कुर्वन्तमभिवीक्ष्य माम् । हृष्टः पुण्योदयो मित्र चेतस्येवमचिन्तयत् ॥ २५ ॥ अहो ! मूर्खः कुमारोऽयं हितं मित्रं विहाय माम् । वैश्वानरेण यन्मैत्री कुरुते विद्विषामुना ॥२६॥ तत्किं निवारयाम्येनमथवा वारितोऽप्यसौ । मित्रं न त्यक्ष्यति क्षुद्र कलङ्कमिव चन्द्रमाः ॥ २७ ॥ तत्किं परि

१ ह्रस्वे सा० क० ग० घ० । २ ०मिधे ता० क० ग० घ० । ३ ह्रस्वे सा० क० ग० घ० । ४ ०रसंज्ञिके ता० क० ग० घ । ५ चपलमा० क० स० ग० घ० । ६ नासिकाम् । ७ रोगिणः ।

त्यजाम्येनं न ह्येतदपि साम्प्रतम् । भवितव्यतयैतस्यादिष्टः सहचरोऽस्मि यत् ॥२८॥ वेदनासमुद्घातेऽपि स्थिर-मध्यस्थभावतः । तोषितोऽहमनेनापि पुरा द्विरदरूपिणा ॥ २९ ॥ तदकाण्डे न मे त्यक्तुं कुसङ्गोऽप्येष युज्यते । ध्यात्वेति स तथैवास्थात् मत्समीपे महामनाः ॥ ३० ॥ इतः संजज्ञिरे बाह्या वयस्या बहवो मम । ततो विचित्रक्रीडाभिस्तैः क्रीडामि निजेच्छया ॥ ३१ ॥ बलिनोऽपि महान्तोऽपि ते च क्षत्रसुता अपि । वैश्वानरयुतं सर्प्पमिव मां वीक्ष्य बिभ्यति ॥ ३२ ॥ प्रणतिं चाटुकर्म्माणि धावनं पुरतोऽपि च । पदातय इवाजस्रं ततः कुर्वन्ति ते मम ॥ ३३ ॥ तत्र पुण्योदयो हेतुरचिन्त्यमहिमाश्रयः । शक्तिर्वैश्वानरस्येयमिति चित्ते त्वभून्मम ॥ ३४ ॥ एवं भावनया तन्वि ! तत्र वैश्वानरेऽन्वहम् । दधानो द्विगुणां प्रीतिमहं जातोऽष्टवार्षिकः ॥ ३५ ॥ अथ मामर्प्पयत्तातो[1] महोत्सवपुरस्सरम् । कलाचार्याय वर्येऽह्नि कलाग्रहणहेतवे ॥ ३६ ॥ ततोऽहमग्रेऽधीयाननिज-भ्रात्रादिभिः सह । तत्समीपे प्रववृते ग्रहीतुं सकलाः कलाः ॥ ३७ ॥ जज्ञे पुण्योदयेनानुकूलवातेन नुन्नया । कलाजलधिपारीणो मतिनावाचिराय च ॥ ३८ ॥ किन्तु विसार्य शास्त्रार्थं वैश्वानरविमोहितः । अकार्षं कलहं भद्रे ! सहाध्यायिभिरन्वहम्[2] ॥ ३९ ॥ मर्म्मोद्घट्टनमश्लीलभाषणं ताडनं तथा । कुर्वे तेषां क्षमे नापि मध्यस्थमपि तद्वचः ॥ ४० ॥ विदधानाः कलाभ्यासं मातापित्रनुरोधतः । ते तु कालं नयन्ति स्म मयकोद्वेजिता अपि ॥४१॥ माभूदनर्थः सर्वेषामिति बुद्ध्या च ते बुधाः । मद्वृत्तं कथयन्ति स्म कलाचार्यस्य नैव तत् ॥ ४२ ॥ तथापि नित्य-

१ ०मार्प्प० ग० ता०। २ सदाध्या० क० ख ० घ० ।

साभिप्रायं फलवस्येव मामकम् । सचेष्टितं कलाचार्यः सकलं स कलानिधिः ॥ ४३ ॥ मामयोग्य इति ज्ञात्वा
ततः सोऽपि न किञ्चन । शिक्षयत्यथवा सुप्तं को बोधयति पन्नगम् ॥ ४४ ॥ यदि वान्यमिषेणैष कदाचिच्छि-
क्षयेदपि । कुर्वे ततोऽहमस्यापि ताडनाक्रोशनादिकम् ॥४५॥ ततः सोऽपि कलेर्भीत्या ते चापि सहपाठिनः । न
संश्लेषमपीच्छ(च्छ)न्ति मम पापस्येव मेऽनघे । ॥४६॥ अथ दध्यावहं चित्ते महामोहस्य दोषतः । अहो! वैश्वानरस्यास्य
माहात्म्यं किञ्चिदद्भुतम् ॥ ४७ ॥ यश्चिरालिङ्गनेनैष वल्लभं विधाय माम् । करोत्यधृष्यं लोकानां प्रज्वलन्त
मिवानलम् ॥ ४८ ॥ सदैष बन्धुः सर्वस्वं शरीरं जीवितं च मे । चञ्चापुरुषकल्पो हि पुरुषो रहितोऽमुना ॥ ४९ ॥
इति पुष्टाय सन्धिं ! तत्र वैश्वानरे मम । स्थिरोऽनुरागः संजज्ञे नीलीराग इवांशुके ॥ ५० ॥ एकान्तगोष्ठ्या
मन्येद्युरथ वैश्वानरः स माम् । प्रहृष्टमानसं दृष्ट्वा समभाषिष्ट दुष्टधीः ॥ ५१ ॥ कुमार ! त्वत्प्रसादस्य प्राणैरपि
न निष्क्रयम् । गच्छाम्यहं चिकीर्षामि दीर्घमायुस्तथापि ते ॥ ५२ ॥ रसायनमहं ह्येकं सुदीर्घायुर्निबन्धनम् ।
जानामि तन्मदादेशाद्विधायार्पयामि ते ॥ ५३ ॥ एवं भवत्विति मया प्रोक्ते मद्य विधाय सः । क्रूरचित्ता
भिधानानि वटकानि समार्पयत् ॥ ५४ ॥ अभ्यधाच्च मया काले संचितेन त्वया सखे ! । एकैक चन्क भक्ष्यमेषां
मध्यादसंशयम् ॥ ५५ ॥ ततोऽवश्यं कुमारस्य दीर्घमायुर्भविष्यति । रसमन्त्रौषधादीनामनुभावो हि नान्यथा ॥
॥ ५६ ॥ मत्रान्तरे च भविता स्थानेऽस्त्वदभीप्सिते । इत्युपश्रुतिमभोपीदेष क्वापि न स्वहम् ॥ ५७ ॥ दध्यौ
च तां निशम्याऽपभवस्य नरकं गमी । कुमारो वटकैरेभिर्दीर्घमायुश्च लप्स्यते ॥ ५८ ॥ अन्यथा हि कृपहारमभूदी

प्रमोदं परमं प्राप विचिन्त्येति स वञ्चकः । मयापि
दृगुपश्रुतिः । ममाभिरुचितं स्थानं सदा नरक एव यत् ॥ ५९ ॥
तान्यगृह्यन्त वटकानि प्रमोदिना ॥ ६० ॥ इतश्च तातो विश्वासपात्रं विदुरनामकम् । आदिशद् यत् कुमारोऽस्ति
समादिष्टो मया पुरा ॥ ६१ ॥ यथानन्यमनस्केन कलादानं त्वयानिशम् । कार्यं नाहमपि प्रेक्ष्यस्त्वां द्रक्ष्या-
म्यहमेव हि ॥ ६२ ॥ ततो मे गमनं कार्यव्यग्रत्वाच्चेन्न जायते । ततः शुद्धिस्त्वया तस्यानेयामन्यत सोऽपि
तत् ॥ ६३ ॥ कुर्वताथ नृपादेशं तेन सर्वोऽपि लक्षितः । सहाध्यायिकलाचार्यकलिव्यतिकरो मम ॥ ६४ ॥
मेनःक्षतिभयात्तेन चिरादकथितोऽपि हि । अन्यदातिभरं दृष्ट्वा स भूपाय निवेदितः ॥ ६५ ॥ तदाकर्ण्य च
तातोऽपि विषादमलिनाननः । विदुरं सत्वरं प्रेष्य कलाचार्यमजूहवत् ॥ ६६ ॥ ततस्तमागतं तूर्णमभ्युत्था-
नासनादिभिः । सत्कृत्य कृत्यविदुरः क्षोणीपतिरदोऽवदत् ॥ ६७ ॥ अयि ! बुद्धिसमुद्रार्य ! कलाग्रहणमेधते ।
कुमाराणामयं प्राह बाढं देवानुभावतः ॥ ६८ ॥ भूपतिः पुनरप्यूचे समुल्लासिमनोरथः । कलाः काश्चित्किमा-
जग्मुः कुमार नन्दिवर्द्धनम् ॥ ६९ ॥ कलाचार्योऽप्यथोवाच नैव काप्यस्ति सा कला । न या प्राप्ता परां
काष्ठां कुमारे वसुधेश्वर ! ॥ ७० ॥ ततोऽथ मुदितोऽवादीद् धन्योऽयं नन्दिवर्द्धनः । आर्य ! संजज्ञिरे यस्य
कलाचार्या भवादृशाः ॥ ७१ ॥ मैवं वद महीनाथ ! वयं केऽत्र तव ध्रुवम् । अनुभावोऽयमित्युक्तस्तेन तातोऽ-
वदत्पुनः ॥ ७२ ॥ आर्योपचारवचसा किमनेन तवैव हि । प्रसादेन कुमारोऽभून्निःशेषगुणभाजनम् ॥ ७३ ॥

१ मनःक्षिति० क० ख० घ०, मत्तः क्षिति० ग० । २ अये ! बु० क० ख० ग० घ० ।

४

तेनोक्तमेवं चेचर्हि वञ्चयः स्वामी न सेवकैः । इत्यहं विज्ञपयितुं देवमिच्छामि किञ्चन ॥ ७४ ॥ तच्च युक्तमयुक्तं वा देवः संसोढुमर्हति । वचनं हि समीचीनं वल्लभं च सुदुर्लभम् ॥ ७५ ॥ यदुक्तार्थौ यथार्थोक्तौ कः कुधः समयो ननु । वातेनेत्युदितो युधिसम्प्रोऽप्यापदन्तुनः ॥ ७६ ॥ एवं यदि ततो देव ! यदादिष्टं त्वया यथा । गुणभाजनमेषोऽभूत्कुमारस्तथयैव हि ॥ ७७ ॥ देव ! किन्तु गुणग्रामः कुमारस्याखिलोऽपि हि । वैश्वानरस्य सम्पर्कान्नस्यतीमयति सर्वथा ॥ ७८ ॥ गुणानामखिलानां च प्रशमो भूषणं परम् । नित्यं सन्निहितस्य च कुमारस्य निहन्त्यसौ ॥ ७९ ॥ मोहान्मित्रं कुमारस्तु मन्यते शत्रुमप्यमुम् । तदीयमित्रसम्पर्कात्कुमारस्य वृथा गुणाः ॥ ८० ॥ ततस्तातस्तदाकर्ण्य वचाहत श्रोत्रकैः । दुःखितो वेदकाभिख्य नरमेवं समादिशत् ॥ ८१ ॥ आकारय द्रुतं भद्र ! कुमारं नन्दिवर्धनम् । मित्रापसदसंसर्गात् येनाहं वारयाम्यहम् ॥ ८२ ॥ नत्वा सोऽप्याह देवस्य प्रमाणं खलु शासनम् । कुमारसंस्तथापि च किन्त्विद निश्चितं मया ॥ ८३ ॥ यदन्तरङ्गभूतोऽयं कुमारस्य वयस्यकः । अपसारयितुं नैव शक्योऽपि हि शक्यते ॥ ८४ ॥ ततोऽस्य त्याजने किञ्चिदुच्यते यदसौ तदा । मारणाद्यादिकमपि विप्रं कुरुते ध्रुवम् ॥ ८५ ॥ देवोऽप्यार्थे कुमारं तत्र किञ्चिद् वक्तुमर्हति । ज्ञायते हि यथानर्थः शिक्षयापि तथा कृतम् ॥ ८६ ॥ कलाचार्योऽवदद् देव ! सत्यमेतेन भाषितम् । कुमारशिक्षणो युक्ता वयमप्यासहे यतः ॥ ८७ ॥ किन्त्वनर्थभयादेव न किञ्चिद् वक्तुमीश्महे । तत्र वचस्य कुमारस्य कर्तुं

सर्गनिवारणम् ॥ ८८ ॥ भाव्यार्य ! क उपायोऽत्र तातेनेत्युदिते ततः । न जानीमो वयमपीत्युवाच पुनरप्यसौ ॥ ८९ ॥ विदुरोऽथावदद् देव ! श्रूयतेऽत्र समागतः । कश्चिज्जिनमतज्ञाख्यः सिद्धपुत्रो निमित्तवित् ॥ ९० ॥ अत्रोपायं त्रिकालज्ञः स जानाति कदाचन । तस्मादेष समाहूय प्रष्टुं सम्प्रति युज्यते ॥ ९१ ॥ हृष्टस्तातोऽथ विदुरं संप्रेष्य तमजूहवत् । सद्यः समागतायास्मै कार्यं च तदचीकथत् ॥ ९२ ॥ विभाव्याख्यत सोऽप्येवमेक एवात्र विद्यते । उपायो नेतरः कोऽपि [1]तं च शृणु नरेश्वर ! ॥ ९३ ॥ अस्तीह क्लेशनिर्मुक्तं मन्दभाग्यैः सुदुर्लभम् । नगरं चित्तसौन्दर्यं कल्याणैकनिकेतनम् ॥ ९४ ॥ दुष्टशिष्टजनस्तोमनिग्रहानुग्रहोद्यतः । नाम्ना शुभपरीणामस्तत्रास्ति वसुधाधवः ॥ ९५ ॥ अगण्यपुण्यलावण्यशीलादिगुणभाजनम् । तस्य चास्ति महीभर्त्तुर्वल्लभा निष्प्रकम्पता ॥ ९६ ॥ सर्वदा विहितावासा मुनीनामपि मानसे । मञ्जूषा गुणरत्नानां क्षान्तिर्नाम तयोः सुता ॥ ९७ ॥ ततो यदैष तां कन्यां कुमारः परिणेष्यति । अनेन पापमित्रेण तदा मैत्रीं विहास्यति ॥ ९८ ॥ यतः प्रभावादेतस्या दूरादेव पलायते । वैश्वानरोऽयं भूपाल ! जाङ्गुल्या इव पन्नगः ॥ ९९ ॥ ततः शुभपरीणामात् मदर्थं क्षान्तियाचने । अमात्यमादिशत् तातो भद्रे ! मतिधनाभिधम् ॥ १०० ॥ देवो यदादिशत्येवमुक्त्वा यावदसौ ततः । गन्तुं प्रववृते तावदूचे नैमित्तिकः पुनः ॥ १०१ ॥ किं क्लेशेनामुना भूप ! न हि तत्र भवादृशाम् । गम्यते मानुषैरेवं तत्रार्थे शृणु कारणम् ॥ १०२ ॥ भावाः सर्वेऽपि भूपाल ! पुरराजप्रियादयः । द्विविधा

---

१ शृणु त च न० ग० । २ ०णामं मदर्थे क्षान्तिमर्थितुम् ग० ।

तेनोक्तमेव चेत्तर्हि भजपः स्वामी न सेवकैः । इत्यहं विज्ञपयितुं देवमिच्छामि किञ्चन ॥ ७४ ॥ तत्र युक्तमयुक्तं वा देवः संशोद्धुमर्हति । यच्चन हि समीचीनं वक्तुमं च सुदुर्लभम् ॥ ७५ ॥ यदस्त्वार्यो यथार्योक्तौ कः क्षमः समयो ननु । तावेनेत्युदितो बुद्धिसद्मोऽप्यायवस्तुनः ॥ ७६ ॥ एवं यदि ततो देव ! यदादिष्टं त्वया यथा । गुणभाजनमेषोऽभूत्कुमारस्तथयैव हि ॥ ७७ ॥ देव ! किन्तु गुणग्रामः कुमारस्याखिलोऽपि हि । वैश्वानरस्य सम्पर्कान्मलीमसति सर्वथा ॥ ७८ ॥ गुणानामखिलानां च प्रशमो भूषणं परम् । नित्यं नाभिहितस्त्व च कुमारस्य निहन्त्यसौ ॥ ७९ ॥ मोहान्मित्रं कुमारस्तु मन्यते शत्रुमप्यमुम् । तदीयमित्रसम्पर्कात्कुमारस्य वृथा गुणाः ॥ ८० ॥ ततस्तातस्तदाकर्ण्य समाहूत इत्योचकैः । दुःखितो वेदकामिम्य नरमेवं समादिशत् ॥ ८१ ॥ आकारय द्रुतं भद्र ! कुमारं नन्दिवर्धनम् । मित्रापशदसंसर्गाद् येनाशु वारयाम्यहम् ॥ ८२ ॥ नत्वा सोऽप्याह देवस्य प्रमाणं खलु शासनम् । कुमारसंस्तवादेव किञ्चिद निश्चितं मया ॥ ८३ ॥ यदन्तरङ्गभूतोऽयं कुमारस्य वयस्यकः । अपसारयितुं नैष शक्येनापि हि शक्यते ॥ ८४ ॥ ततोऽस्य स्थापने किञ्चिदुच्यते यदसौ तदा । आत्मघातादिकमपि विदुरं कुरुते ध्रुवम् ॥ ८५ ॥ देवोऽत्रार्थे कुमारं तत्र किञ्चिद् वक्तुमर्हति । ज्ञायते हि यथामर्षः शिक्षयापि तथा कृतम् ॥ ८६ ॥ कलाचार्योऽवदद् देव ! सत्यमेतेन भाषितम् । कुमारशिक्षणो युक्ता वयमप्यासहे यतः ॥ ८७ ॥ किन्त्वनर्थभयादेन न किञ्चिद् वक्तुमीश्महे । तत्र सकल कुमारस्य कर्तुं

१ अप । प० ।

सर्गनिवारणम् ॥ ८८ ॥ भाव्यार्य ! क उपायोऽत्र तातेनेत्युदिते ततः । न जानीमो वयमपीत्युवाच पुनरप्यसौ ॥ ८९ ॥ विदुरोऽथावदद् देव ! श्रूयतेऽत्र समागतः । कश्चिज्जिनमतज्ञाख्यः सिद्धपुत्रो निमित्तवित् ॥ ९० ॥ अथोपायं त्रिकालज्ञः स जानाति कदाचन । तस्मादेष समाहूय प्रष्टुं सम्प्रति युज्यते ॥ ९१ ॥ हृष्टस्तातोऽथ विदुरं [illegible] तमजूहवत् । सद्यः समागतायास्मै कार्यं च तदचीकथत् ॥ ९२ ॥ विभाव्याख्यत सोऽप्येवमेक [illegible] विद्यते । उपायो नेतरः कोऽपि [1]तं च शृणु नरेश्वर ! ॥ ९३ ॥ अस्तीह क्लेशनिर्मुक्तं मन्दभाग्यैः सुदुर्ल- [illegible] । [illegible] विलसौन्दर्यं कल्याणैकनिकेतनम् ॥ ९४ ॥ दुष्टशिष्टजनस्तोमनिग्रहानुग्रहोद्यतः । नाम्ना शुभपरी- [illegible] ॥ ९५ ॥ अगण्यपुण्यलावण्यशीलादिगुणभाजनम् । तस्य चास्ति महीभर्तुर्वल्लभा [illegible] ॥ ९६ ॥ सर्वदा विहितावासा मुनीनामपि मानसे । मञ्जूषा गुणरत्नानां क्षान्तिर्नाम तयोः सुता [illegible] ॥ [illegible] कुमारः परिणेष्यति । अनेन पापमित्रेण तदा मैत्री विद्यास्यति ॥ ९८ ॥ यतः [illegible] प्रणश्यते । वैश्वानरोऽयं भूपाल ! जाङ्गुल्या इव पन्नगः ॥ ९९ ॥ ततः शुभपरीणीमात् [illegible] तातो भवे ! मतिधनाभिधम् ॥ १०० ॥ देवो महाविशरगेवमतथा [illegible] पुनः ॥ १०१ ॥ किं क्लेशेनाधुना भूप ! न हि तत्र भवा- [illegible] कारणम् ॥ १०२ ॥ [illegible] सर्वेऽपि भूपाल ! पुरराजपितादयः । क्षिप्रा [illegible]

1 ऽथ भा० क० [illegible]

हि मवन्त्यत्र बाह्याभ्यन्तरभेदतः ॥ १०३ ॥ तत्र बाह्येषु भावेषु गमनागमनादिकः । भवादृशानां व्यापारो
नान्तरेषु कदाचन ॥ १०४ ॥ एवञ्च पुरराजादि पर्यन्ते सर्वमान्तरम् । ततो न शक्यते गन्तुं भवतस्तत्र भद्रिणा
॥ १०५ ॥ प्रभवस्यार्य ! कस्तर्हि तत्रेति क्षितिपोदिते । असौ पुनरुवाचैव य एवाभ्यन्तरो नृपः ॥ १०६ ॥
कः सोऽपीति पुनः पृष्टस्तातेन वचकोऽवदत् । विवेककर्म्मठः कर्मपरिणामो नरेश्वरः ॥ १०७ ॥ तेनैव क्ष्मासुजा
शान्तिपित्रे तस्मै समासुजे । भटसूक्त्या पुरं दत्तं तवतोऽसौ हि तद्वशः ॥ १०८ ॥ प्रार्थनाविषयः कर्मपरिणामः
स भादृशाम् । नचेति पृष्टस्तातेन पुनर्नैमित्तिकोऽब्रवत् ॥ १०९ ॥ नेतदेव स हि भावो नृपः स्वैरी न गृह्यते ।
अभ्यर्थनोपरोधोपचारैः परकृतैः क्वचित् ॥ ११० ॥ किन्त्वेषोऽपि नृपः कालपरिणत्यादिकं निजम् । सर्वं कुटुम्ब
मापृच्छ्य सदा कार्ये प्रवर्तते ॥ १११ ॥ ततो रोचिष्यतेऽमुष्य यदा पृष्ट्वा कुटुम्बकम् । तदा स्वयं कुमाराय
स शान्तिं दापयिष्यति ॥ ११२ ॥ भुस्वेत्यथ नृपोऽवोचदार्य ! तर्हि हता वयम् । यतो रोचिष्यते तस्य कदापीति
न बुध्यते ॥ ११३ ॥ दैवज्ञः पुनरप्याह कृतं खेदेन भूपते ! । किमत्र क्रियते कार्यमित्थमेव यत्
॥ ११४ ॥ नरः प्रमादी शक्येऽर्थे स्यादुपालम्भभाजनम् । अशक्यवस्तुविषये पुरुषो नापरा
ध्यति ॥ ११५ ॥ किन्त्वस्त्यस्य कुमारस्य गुप्तः पुण्योदयः सुहृत् । येनाजरकृतं सर्वमनर्थं सोऽपनेष्यति ॥ ११६ ॥
एतदाकर्ण्य संजातस्तातः स्वस्थमना मनाक् । अत्रान्तरे च पयाधि ! मन्दिनैषमपक्रमत ॥ ११७ ॥ न कोपात् तेजसो वृद्धिः किन्तु मध्यस्थभावतः । दर्शयन्निति लोकानां सूर्यो मध्यस्थतां ययौ ॥११८॥

ततो मध्याह्नसमयं विज्ञायावनिशासनः । नैमित्तिककलाचार्यौ पूजयित्वा विसृष्टवान् ॥ ११९ ॥ नैमित्तिकगिरा जातनिर्णयोऽप्यथ भूपतिः । इत्यादिदेश विदुरमपत्यस्नेहमोहितः ॥ १२० ॥ ज्ञेयो भावः कुमारस्य भवता भद्र ! धीमता । पापमित्रादसौ शक्यः किं वियोजयितुं न वा ? ॥ १२१ ॥ देवो यदादिशत्येवं विदुरेणार्थं भाषिते । चक्रे नृपतिरुत्थाय कृत्यं मध्यन्दिनोचितम् ॥ १२२ ॥ द्वितीयेऽह्नि मदभ्यर्णं विदुरोऽपि समाययौ । कल्ये किं नागतोऽसीति स मया समभाषि च ॥ १२३ ॥ सोऽथ सञ्चिन्तयामास समादिष्टोऽस्मि भूभुजा । परिज्ञातुं कुमारस्याभिप्रायं तावदादरात् ॥ १२४ ॥ ततो मया कुसंसर्गदोषाणां प्रतिपादिका । सुसाधुभ्यः श्रुता यास्ति कथयाम्यस्य तां कथाम् ॥ १२५ ॥ विज्ञास्यामि ततोऽमुष्य सुखेनैवाहमाशयम् । विचार्येति विचारज्ञः प्रत्यभाषत मामसौ ॥ १२६ ॥ कुमार ! किञ्चिदाक्षेण्यं कल्ये मेऽभून्मयोदितम् । कीदृशं तत्ततस्तेन प्रोचे हृद्या कथा श्रुता ॥ १२७ ॥ ममाप्याख्याहि तामेवमनुयुक्तो मयाथ सः । विदुरस्तां समारेभे समाख्यातुं कथामिति ॥ १२८ ॥ अस्त्यस्यां मनुजगतौ पुर्यां भरतपाटके । क्षितिप्रतिष्ठितं नाम नगरं सम्पदां पदम् ॥ १२९ ॥ तत्रास्ति बलवान्कर्म्मविलासो नाम भूपतिः । शुभसुन्दर्यकुशलमाले तस्य प्रिये उभे ॥ १३० ॥ मनीषिबालनामानौ तयोः पुत्रौ यथाक्रमम् । गुणानां वसतिर्ज्येष्ठो दोषाणामपरः पुनः ॥ १३१ ॥ स्वदेहाख्ये वने ताभ्यां दृष्टः कश्चिन्नरोऽन्यदा । स तयोः पश्यतोरेवारोहत् नाकुं तदुच्छ्रयम् ॥ १३२ ॥ मुद्धाख्यवृक्षशा-

१ ऽथ भा० क० घ० । २ व्यग्रता । ३ मनोज्ञा । ४ वल्मीकम् ।

सायां ततस्त्वं स पाशकम् । निबध्य कन्धरायां च निधाय स्वमशुश्रत ॥ १३३ ॥ ततो मां साहसमिति जल्प
न्तौ सम्भ्रमेण तौ । मनीषिबालौ तरसा तत्समीपमुपेयतुः ॥ १३४ ॥ बालेन छिन्नपाशोऽथ मूर्च्छया स नरः
क्षितौ । पतितो वायुदानेन ताभ्यामाश्वासितस्ततः ॥ १३५ ॥ समासादितचैतन्य कुमारावूचतुस्ततः । किमेतद्
भवता भद्र ! कृत कापुरुषोचितम् ॥ १३६ ॥ को वास्य करणे हेतुः समभूद् दुरतिक्रम । नैवास्ति वचना-
कथेन तदिव कथयाचयोः ॥ १३७ ॥ दीर्घदीर्घ स निःश्वस्य पुरुषस्तावभाषत । अलं मदीयकथया युवाभ्यां
चारु नो कृतम् ॥ १३८ ॥ यदहं निमदुःस्तार्थि निर्वापयितुमुद्यतः । भवद्भ्यां वारितः कार्यस्तस्य विघ्नोऽधुना पि
मे ॥ १३९ ॥ इत्युक्त्वा स पुनर्बद्धुमात्मानमुपस्थितः । तावद् बालेन ताभ्यां प्रत्येयं सममापि सः ॥ १४० ॥
तावद्वावेयतां भद्र ! स्ववृत्तान्तस्ततो न चेत् । भवेद् कोऽपि प्रतीकारं कुर्वः स्वरुचितं ततः ॥ १४१ ॥ पुरुषः
प्राह यद्यस्ति निर्बन्धस्तन्निशम्यताम् । बभूव भवसन्ताख्यः सर्वस्वमिव मे सुहृत् ॥ १४२ ॥ स्नेहेन कुर्वता सर्वं
पृष्ट्वा पृष्ट्वा ममेप्सितम् । स्वप्नेऽपि स्पर्शनाख्योऽद्य तेन न प्रतिकूलितः ॥ १४३ ॥ तेनान्यदा ममाभाग्यैः
पुमाचार्यः सदागमः । दृष्टो दिवसे चाय पर्यालोच सहामुना ॥ १४४ ॥ एष दिने दिने चक्रे तत्संसर्गं यथा
यथा । तथा तथायं निःस्नेहो जातो मयि शनैः शनैः ॥ १४५ ॥ मयाथ चिन्तितं हन्त किमेतद् यदयं सुहृत् ।
परापर्षितजन्मेव निःस्नेहः समभून्मयि ॥ १४६ ॥ आ ! ज्ञातमभानर्थसन्ततिः सकलाप्यसौ । सदा सदा
गमस्यास्य पर्यालोचात्समापत ॥ १४७ ॥ विमृश्येति महाशोककलङ्कसङ्कुलचेतसा । मया कम्पकम्पमपि किया

न्कालाऽतलाङ्कतः ॥ १४८ ॥ साद्ध सदागमनाथ किञ्चिदालोच्य सोऽन्यदा । सम्बन्धं सर्वथात्याक्षीद् भवजन्तुर्मया समम् ॥ १४९ ॥ मत्प्रियं ललनातूलीचेलचर्चादिकं मृदु । मद्वाचा यत्पुराग्राहि तदप्येतेन तत्यजे ॥ १५० ॥ केशोत्पाटनशीतोष्णास्नानभूशयनादिकम् । ततः प्रभृति किन्त्वेष सेवते स्म ममाप्रियम् ॥ १५१ ॥ ततस्तं तादृशं वीक्ष्य मया चेतसि चिन्तितम् । गृहीतः शत्रुबुद्ध्याहं तावन्मित्रेण सर्वथा ॥ १५२ ॥ तथाप्यकाण्ड एवायं न मोक्तव्यः सुहृन्मया । निश्छद्मनां हि मित्राणां प्रणयो मरणावधिः ॥ १५३ ॥ भद्रकश्च स्वरूपेण भवजन्तुरसौ मयि । अधुनैवेदृशो जज्ञे सदागमविमोहितः ॥ १५४ ॥ ततो मोहे गते पूर्वमिव स्निह्यति चेन्मयि । ध्यात्वेति तस्य देहाख्ये गेहेऽहं पूर्ववत् स्थितः ॥ १५५ ॥ अन्येद्युर्मां समाक्रुश्य[1] निष्कास्य च ततो गृहात् । जगाम निर्वृतौ पुर्यामगम्यायां स मादृशाम् ॥ १५६ ॥ प्रियमित्रवियुक्तस्य निष्फलैरधुना मम । किं प्राणैश्चिन्तयित्वेति मयैवं विदधे ततः ॥ १५७ ॥ अथ बालो जगादैवं साधु स्पर्शन ! साधु ते । स्थानेऽध्यवसितं मित्रविरहो हि सुदुःसहः ॥ १५८ ॥ धार्यास्तथापि भद्रेण प्राणा मदुपरोधतः । अन्यथा गतिरेषैव ममापि हि भविष्यति ॥ १५९ ॥ अम्लिकाभिर्न पूर्यन्ते यद्यप्याम्रमनोरथाः । तद्वियोगप्रतीकारबुद्ध्या धार्यस्तथाप्यहम् ॥ १६० ॥ स्पर्शनोऽथाब्रवीदार्य ! साधु साधु त्वया पुनः[2] । वचनामृतसेकान्मे शमितः शोकपावकः ॥ १६१ ॥ धृता एव मया प्राणाः किमुक्तेन घनेन[3] वा । कुमार ! सांप्रतं नूनं भवजन्तुस्त्वमेव मे ॥ १६२ ॥

१ तिरस्कृत्य । २ सुतः ता० क० ख० घ० । ३ बहुना ।

ततस्तयोरियं मैत्री मध्ये दृष्ट्वा मनीष्यपि । न कोऽप्यकृत्रिम मित्रं यावत् त्यजति धीधनः ॥ १६३ ॥ न चा सदाममेनापि स्यात्यजते कारणं विना । यतः स भूपतेऽत्यन्त पर्यालोचितकारकः ॥ १६४ ॥ तेन मन्योऽय मेतेन मैत्री चालस्य चाधुना । एवं संचिन्तयन्नेन स्पर्शनेनाभिभाषितः ॥ १६५ ॥ कृतं मनीषिणाप्यस्या लपनं लोकयात्रया । मैत्री चाभूत् यहिर्द्वैरथा सर्वे च नगरं ययुः ॥ १६६ ॥ गत्वा च गेह देवीभ्यां सहि तस्य महीपतेः । नत्वा स्पर्शनवृत्तान्तः कुमाराभ्यां निवेदितः ॥ १६७ ॥ एटः कर्म्मविलासोऽथ चिन्तयामास चेतसि । स्पर्शनेनामचस्यार्द्धं साधु मैत्री कुमारयोः ॥ १६८ ॥ अपथ्यमामयस्येव स्पर्शनोऽसौ यतो मम । वृद्धिहेतुर्मया चैष दृष्टोऽनेकशः पुरा ॥ १६९ ॥ अनादिरूढः किन्त्वेष स्वभावो मम वर्तते । हितोऽस्य यो मया भाव्य विपरीतेन तस्य यत् ॥ १७० ॥ यस्त्वेतस्याहितस्तस्यानुकूलः सर्वथाप्यहम् । परित्यजति यत्नेन स्यात्पोऽवश्यं मयाऽपि सः ॥ १७१ ॥ तदर्थसंस्थिते भाव वीक्ष्य वीक्ष्य कुमारयोः । यथोचितं विधा स्यामीति ध्यात्वा सोऽन्यथाविदम् ॥ १७२ ॥ सुन्दरं विदधे वत्सौ । यदेष स्पर्शनो धने । लोकावेशात् स्वयन् आपान् प्रैतो मैत्रीविधानतः ॥ १७३ ॥ तदाकुलतमालापि दृष्ट्वो धन्याऽस्मि निश्चितम् । एतस्स न्मधतो नाम यथार्थं माथि मे यतः ॥ १७४ ॥ स्पर्शनस्य हितो यो हि स ममास्यन्तवल्लभः । मस्मिथ रक्तो मे सद्गुर्वसरागेण लक्ष्यते ॥ १७५ ॥ ध्यात्वेति बालं सा प्राह साधु वत्स । त्वया कृतम् । स्पर्शनेनास्तु ते

१ तयम० म० । २ अ न० क० स० प० । ३ भवो ता० क० स० प० ।

नित्यमवियोगो मदाशिषा ॥ १७६ ॥ तदा च शुभसुन्दर्याप्येवं चेतसि चिन्तितम् । सम्बन्धः पापमित्रेण मम
सूनोर्न सुन्दरः ॥१७७॥ रिपुरेष महानर्थकारणं सहजो हि मे । कदर्थिताहमेतेन पुरापि बहुशो यतः ॥१७८॥
अस्ति केवलमेतावान् स्वास्थ्यहेतुर्यदेष मे । सूनुरस्मिन् विरागी च लक्ष्यते मुखरागतः ॥ १७९ ॥ इत्थं विचि-
न्त्य गाम्भीर्यान्नैव किञ्चिदुवाच सा । मध्याह्ने च तदा जाते सर्वे स्वं स्वं पदं ययुः ॥ १८० ॥ ततश्च मैत्री बालस्य
स्पर्शनेन सहैधते । मनीषी तु न विश्रम्भं तस्य गच्छति सर्वथा ॥ १८१ ॥ स्पर्शनस्तु तयोः पार्श्वं बहिरन्तश्च
नोज्झति । चिन्तयामास चान्येद्युर्मनीषी निजमानसे ॥ १८२ ॥ स्वरूपं तावदद्यापि स्पर्शनस्य न लक्ष्यते । हातुं
वा संग्रहीतुं वा ततोऽयं नैव पार्यते ॥ १८३ ॥ मूलशुद्धिस्ततोऽमुष्य विधातुं मम युज्यते । तस्यां च सम्यग्
जातायां करिष्यामि यथोचितम् ॥ १८४ ॥ एवं विचिन्त्य विजने समाहूयाङ्गरक्षकम् । बोधाभिधानं तन्मूल-
शुद्ध्यर्थं स समादिशत् ॥ १८५ ॥ अङ्गीकृत्य तदादेशमथ बोधोऽपि सत्वरम् । विविधाशेषविषयवेषभाषाविच-
क्षणम् ॥ १८६ ॥ स्वामिकार्ये बद्धकक्षमतिदक्षमलक्षितम् । तदर्थं स्वं प्रभावाख्यं पुरुषं प्राहिणोच्चरम् ॥ १८७ ॥
युग्मम् ॥ कियन्तमप्यथो कालं नानादेशेषु सोऽपि हि । परिभ्रम्यान्यदा बोधसमीपं समुपाययौ ॥ १८८ ॥
सत्कारमुचितं कृत्वा पृष्टो बोधेन सादरम् । स स्वरूपं कथयितुं प्रारेभे प्रणिधिस्ततः ॥ १८९ ॥ युष्मदादेशतस्ता-
वदितो निर्गत्य सर्वतः । बहिरङ्गेषु देशेषु परिभ्रान्तोऽहमुद्यतः ॥ १९० ॥ प्रस्तुतार्थस्य गन्धोऽपि तेषु नासादितः

१ ततो दे० क० ख० ग० घ० । २ चरः ।

परम् । ततोऽहमन्तरङ्गेषु विषयेषु समाविशम् ॥ १९१ ॥ ददृशे तत्र चैकत्र मिलत्पक्ष्मीनिभं मया । पुरं राजस चित्ताख्यमपायैकनिकेतनम् ॥ १९२ ॥ हेतुः पापप्रवृत्तीनां शक्राद्यैरपि दुर्लभः । तत्रातुलबलो राजा नामतो रागकेशरी ॥ १९३ ॥ लीलयोद्धृतनिःशेषराज्यभारो धियां निधिः । विषयाभिलाषनामा तस्यास्ति सचिवाग्रणीः ॥ १९४ ॥ ततस्तत्र पुरे यावदहं नृपगृहान्तिके । जगामोल्लसितोऽकस्मात्तावत्कोलाहलो महान् ॥ १९५ ॥ ततश्चाभिमहारम्भलौल्यादिनृपतिभिस्तैः । एवैरपेतं मिथ्याभिनिवेशादिभिरुत्करैः ॥ १९६ ॥ गर्भजन्ममस्य मुक्तेममज्ञानाद्यपरिवृतम् । चापलादिभटाकीर्णं कन्दर्पपटहारवम् ॥ १९७ ॥ शिशोकादिव्यसनपूर्यं विलासादिन्न माकुलम् । रागकेशरिभूभर्तुरभित निर्ययौ बलम् ॥ १९८ ॥ विक्षेपकम् । ततोऽचिन्ति मया मन्ये धियामुः काप्यर्य नृपः । तत्र किं कार्यमस्यैवं यावदस्मि वितर्कयुक् ॥ १९९ ॥ तावदस्यैव विषयाभिलाषस्यातिदारुणः । विपाको नाम नासीरे पुरुषो ददृशे मया ॥ २०० ॥ युग्मम् ॥ ततश्च स प्रियप्रश्नपूर्वं तस्य महीपतेः । प्रस्थान कारणं पृष्टो विपाको मोममापत ॥ २०१ ॥ आपार्थमेव देवेन रागकेशरिणा पुरा । विषयाभिलाषनामा मिलपे सचिवो निजः ॥ २०२ ॥ यदुतार्य ! तथा किञ्चित् त्वं विधेहि यथा मम । विश्वं विश्वमिदं सम्यक् किङ्करत्वं प्रपद्यते ॥ २०३ ॥ आदाय तदमात्योऽथ शिरसा नृपशासनम् । स्वामिकार्येषम भक्तिपूर्वं तत्क्षण मपश्यसम् ॥ २०४ ॥ नियमेन स्पर्शनादिगुरमाजुपपत्रकम् । प्राहिणोत् त्वरित विश्वपक्षीकरणहेतवे ॥ २०५ ॥

१ अभिमसैन्ये । २ मम मापते स्व० ।

युग्मम् ॥ तेनाप्यनन्यसामान्यविक्रमेणाखिलं जगत् । लीलयैव विनिर्जित्य कृतं देवस्य किङ्करम् ॥ २०६ ॥
किन्तु सम्प्रति तस्येतिरिव सैस्यस्य नाशकृत् । सन्तोषो नाम चरटः श्रूयते कश्चिदुत्थितः ॥ २०७ ॥ कृत्वा च
तत्पराभूतिं जनस्तेन कियानपि । निर्वाह्य देवागम्यायां निर्वृतौ प्रापितः पुरि ॥ २०८ ॥ एतदाप्तजनश्रुत्या
श्रुत्वा देवो रुषारुणः । प्रस्थानभेरीं तस्याथोन्मूलनार्थमताडयत् ॥ २०९ ॥ अत्रान्तरे च संक्रुद्धं कल्पान्तत-
पनोपमम् । देवं निरीक्ष्य मन्त्रीशः शनकैरब्रवीदिति ॥ २१० ॥ कोऽयं देव ! तवायासः सन्तोषेऽस्मिंस्तपस्विनि ।
मृगेन्द्रस्य मृगे किं स्यात् संरम्भः कुम्भिभेदिनः ॥ २११ ॥ देवोऽवादीदिदं सत्यं किन्त्वार्योद्वेजिता वयम् ।
कुर्वता तेन पापेन त्वन्मानुषपराभवम् ॥ २१२ ॥ अनुन्मूल्य ततो दुष्टमेनं मे न भवेद् रतिः । मन्त्र्यूचे स्तोक-
मेवेदं कार्यं मुञ्च ततः क्रुधम् ॥ २१३ ॥ प्रशान्तस्तद्गिरा मेघवृष्ट्येव दवपावकः । जज्ञे देवोऽथ चक्रे च निःशेषं
गमनोचितम् ॥ २१४ ॥ ततः स्नेहजलापूर्णे प्रेमाबन्धाभिधे पुरः । न्यस्ते कुम्भे तथोद्घुष्टे केलिजल्पजयध्वनौ
॥ २१५ ॥ गीतेषु मङ्गलेषूच्चैश्चाटुवाक्याभिधेषु च । प्रकामं कामकलहातोद्येषु प्रहतेषु च ॥ २१६ ॥ अङ्गरागा-
भिरामाङ्गः स्वीकृताशेषभूषणः । मिथ्यावलेपमारोहद् रथं देवो महारथः ॥ २१७ ॥ विशेषकम् ॥ देवोऽ
स्मार्षीत् तदा चैवमहो ! क्षूणमभून्मम । अनापृच्छ्यैव यत्तातं प्रस्थितोऽस्मि द्विषद्वधे ॥ २१८ ॥ मयोक्तमस्य

१ लीलयेव ख० । २ किङ्करीक्रियतेऽखिलम् ग० । ३ शस्य० क० ख० ग० । ४ स्पर्शनादिपराभवम् । ५ दस
हजार धनुर्धर साथे एकलो युद्ध करी शके तेवो योद्धो । ६ पमादः ।

कस्तात ! स प्रोचे मुग्धधीरसि । महामोहपितैतस्य ननु त्रैलोक्यविश्रुतः ॥ २१९ ॥ किञ्चैष प्रेरणया तात्य प्रवरे निवसनसे । रागकेसरिणेऽमुष्मै पालयित्वा जगच्चिरम् ॥ २२० ॥ तथापीदं जगत्सर्वं पार्श्वस्थोऽपि स्वलक्षितः । स एव पालयत्यन्यः को हि स्यादस्य पालकः ॥ २२१ ॥ तदेष निर्जिताशेषसुरासुरनरेश्वरः । महामोहनरेन्द्र स्ते कथं प्रत्यक्षतां गतः ॥ २२२ ॥ ततो मयोदितं सौम्य ! न कार्यः प्रेक्षितस्त्वया । अश्वनीनोऽस्मि वृत्तान्त स्यैतस्याविदुरो यतः ॥ २२३ ॥ मयापि च महामोहः सामान्येन श्रुतः पुरा । रागकेसरिराजेन्द्रजनकस्तेन नो पुनः ॥ २२४ ॥ वृत्तान्तमुत्तरमपि तस्यमाख्यातुमर्हसि । इत्युक्तः स मया वक्तुं पुनरेवं प्रचक्रमे ॥ २२५ ॥ कम्पमानजराजीर्णाविषाश्लतिकापरम् । लम्बमानतमःसंप्रभूपुर्णं चिभ्रत तथा ॥ २२६ ॥ तृष्णाख्यवेदिकायां च विपर्यासाख्यविष्टरे । उपविष्टं महामोहं गत्वा देवोऽथ दृष्टवान् ॥ २२७ ॥ युग्मम् ॥ तदंघ्री च नमस्कृत्य निविश्याऽऽसनि योचिते । कृताञ्जलिः स तातस्य प्रस्तुतार्थं व्यजिज्ञपत् ॥ २२८ ॥ तन्निशम्याब्रवीदेष महामोहमहीपतिः । वत्स ! जीर्णपटस्येव मा(मा)यो मे वर्ततेऽन्तिमः ॥ २२९ ॥ तद् पालनमयस्येव यन्मदङ्गस्य यापते । तत्सारं वत्सति मयि प्रस्थानं युज्यते न ते ॥ २३० ॥ देवोऽभादीत् ततः शान्तं पाप हतममङ्गलम् । मन न्तकल्पावस्थापि देहं तातस्य जायताम् ॥ २३१ ॥ प्रस्थानं न च तातस्य मयि तिष्ठति युज्यते । तथात ! प्रस्तुतार्थेऽस्मिन्ननुजानीत मां द्रुतम् ॥ २३२ ॥ वत्स ! तावन्मयावश्यं गम्य तत्र पुनः स्थिरतो । अनुजेस्यामि

१ मकर यतो यस्य मयणाः—न्नत स्पर्शः । २ कोपः । ३ निवेदया० क० ख० ।

धायाथ महामोहः समुत्थितः ॥ २३३ ॥ जनकस्याथ निर्बन्धं ज्ञात्वा देवोऽवदत्पुनः । यद्येवं तात ! तदहमपि
तातपदानुगः ॥ २३४ ॥ भवत्वेवं न जात ! त्वां मोक्तुं वयमपीश्महे । इति वाचा स्वतातस्य देवोऽथ मुदि-
तोऽभवत् ॥ २३५ ॥ तातामात्ययुतः सोऽथ रागकेशरिभूपतिः । कम्पयन्नखिलं लोकं समन्ताच्चलितैर्बलैः
॥ २३६ ॥ संतोषचरटोच्छित्त्यै प्रचचाल महाबलः । तदिदं पान्थ ! जानीहि नृपप्रस्थानकारणम् ॥ २३७ ॥
॥ युग्मम् ॥ त्वां कुतूहलिनं वीक्ष्य मयैतच्च निवेदितम् । अग्रानीके नियुक्तस्यान्यथास्त्यवसरो न मे ॥ २३८ ॥
इत्याख्याय विपाकोऽथ जगाम विहितानतिः । दध्यौ चाहं तदा राजकार्य्यमेतावता कृतम् ॥ २३९ ॥ यतो
विषयाभिलाषगृहमानुषपञ्चकम् । विपाकेन यदाख्यातं तत्राद्यः स्पर्शनो ह्यसौ ॥ २४० ॥ मूलशुद्धिः स्प-
र्शनस्य ततो लब्धा स्फुटा मया । एतावदेव नवरं व्यभिचारीह वर्त्तते ॥ २४१ ॥ यदात्मनः पराभूतिः स्पर्श-
नेन सदागमात् । निवेदिता विपाकेन तस्य[2] सन्तोषतस्तु सा[3] ॥ २४२ ॥ सदागमानुगः कश्चिद् यद्वा सोऽपि
भविष्यति । विचिन्त्येत्यागतोऽत्राहं प्रमाणं संप्रति प्रभुः ॥ २४३ ॥ बोधोऽथ तद्युतः सर्वं तद्गत्वाऽऽख्यन्मनीषिणे।
तुष्टचित्तेन तेनापि प्रभावः पूजितस्ततः ॥ २४४ ॥ पृष्टो मनीषिणान्येद्युः स्पर्शनो भद्र ! किं तव । कुतः
सदागमेनैव विरहो भवजन्तुना ॥ २४५ ॥ उताऽऽसीत्कश्चिदन्योऽपि सोऽप्यूचेऽन्योऽप्यभूत्परम् । कृतं तत्क-
थया तस्य नामतोऽपि बिभेमि यत् ॥ २४६ ॥ किञ्चासीदुपदेष्टैव भवजन्तोः सदागमः । पीडां चक्रे स तु

१ वत्स । २ स्पर्शनस्य । ३ पराभूतिः ।

क्रूरकर्मा मर्मविच्च मम ॥ २४७ ॥ नामाभ्यासात्तुमेतस्य युक्तं पापात्मनो न च । पापिनां हि कथा श्रेय प्रतिबन्धविधायिनी ॥ २४८ ॥ कुमारः प्राह तन्नामश्रवणे कौतुकं मम । न चासभिकृतस्येन कर्तव्यं तद्वच त्वया ॥ २४९ ॥ नाममात्रश्रवणमात्रेण पापं किञ्चित् भवेत च । नहि पावक इत्युक्ते दाहः संपद्यते कश्चित् ॥ २५० ॥ तन्निर्बन्धं ततो ज्ञात्वा स्पर्शनोऽभाषतीदिति । नाम दुर्नामकस्यास्य यदि संतोष इष्यते[1] ॥ २५१ ॥ दृष्ट्वा च कुमारोऽपि सम्यमासादिता ध्रुवम् । प्रभावेन स्पर्शनस्य मूलशुद्धिः सुबुद्धिना ॥ २५२ ॥ यतः सन्तोष इत्यन्तः पर्यंकोऽस्पटमानकः । तत्रासीदधुना सोऽपि घटितः स्पर्शनोक्तितः ॥ २५३ ॥ मयापि तर्कितं पूर्वं सम्यग् यमेष सुन्दरः । विषयाभिलाषापेक्षादसौ हि जनवञ्चकः ॥ २५४ ॥ तथापि बालभावेन मया मित्रतयादृतः । तमावकसावेपासौ चिरात् मुच्यते न मे ॥ २५५ ॥ किन्त्विदानीमविश्वस्तेनास्य भाव्यं विशेषतः । प्रस्तावे पुनरायाते स्वान्योऽप्य सर्वथा मया ॥ २५६ ॥ ध्यात्वेति पूर्वस्थित्यैव मनीषी विलसत्यच । सार्द्धं स्पर्शनया ताभ्यां कासारोपवनादिषु ॥२५७॥ अन्येद्युः स्पर्शनोऽओचदिति बालमनीषिणौ ।[2] किं सारं? किं च वाञ्छन्ति विश्वे विश्वेऽपि जन्तवः ॥ २५८ ॥ बालेन मुखमित्युक्ते स्पर्शनः पुनरब्रवीत् । तदेव सेव्यते किं न सर्वदा सर्वदेहिभिः ॥ २५९ ॥ कस्तस्य सेवनोपायः ? इति बालोदितः पुनः । अहमेवेति साक्षेपं स्पर्शनः समभाषत ॥ २६० ॥ बालेन कथमित्युक्तः स्पर्शनः पुनरभ्यधात् । समस्ति योगशक्तिर्मे अनाभर्यविधायिनी ॥ २६१ ॥ लीये त्वयि

१ मनीषी । २ ०वैम चि० ख० ।

[1]तया चाहं प्रविश्याङ्गं शरीरिणाम्। कोमलस्पर्शसम्बन्धं कुर्वन्ति यदि ते ततः ॥ २६२ ॥ ततो निरुपमं शर्म्म
लभन्ते ते न संशयः। तन्निशम्याह बालोऽपि भवता वञ्चिता वयम् ॥ २६३ ॥ इयत्कालं यतो मित्र ! त्व-
य्येतत् कथितं न नौ। तदावयोः स्वशक्तिं तामधुनापि प्रदर्शय ॥ २६४ ॥ ततः किं क्रियतामेतदित्यभिप्रायतो-
ऽमुना। निरीक्षितं मुखाम्भोजं स्पर्शनेन मनीषिणः ॥ २६५ ॥ किं करोत्येष पश्यामीति धियाऽऽह मनीष्यपि।
वयस्य ! क्रियतां बालजल्पितं किमसुन्दरम् ? ॥ २६६ ॥ स्पर्शनोऽप्यथ हृष्टात्मा कृतध्यानादिनाटनः। कुमारयोः
प्रविश्याङ्गं त्वचि लीनोऽभवत् क्षणात् ॥ २६७ ॥ बालो जातमृदुस्पर्शस्पृहोऽथ स्पर्शनप्रियम्। सेवते सर्वदा
गृद्धो मृदुस्त्रीवसनादिकम् ॥ २६८ ॥ दुःखकारणमप्येतद्विपर्यासवशाच्च सः। पामाकण्डूयनमिव मन्यते सुखम-
द्भुतम् ॥ २६९ ॥ मनीषी तु समुत्पन्नमृदुस्पर्शस्पृहोऽपि हि। नैव तत्तदसेविष्ट तत्त्वज्ञः स्पर्शनप्रियम् ॥ २७० ॥
कालं कियन्तमप्ये[2]षोऽनुवर्त्योऽस्ति मया खलु। इति बुद्ध्या कदाप्येतद्यद्यप्येष निषेवते ॥ २७१ ॥ लौल्याभावात्
तथाप्यस्य सन्तोषसुखशालिनः। [3]उल्लाघस्येव पथ्यान्नं कुरुते सुखमेव तत् ॥ २७२ ॥ अन्यदा प्रकटीभूय स्प-
र्शनो बालमालपत्। मदीयस्य श्रमस्यास्ति मित्र ! किञ्चित् फलं न वा ? ॥ २७३ ॥ बालेन बाढमस्तीति
गदिते मुदितात्मना। जातो मम [4]विधेयोऽयं दध्याविति स दुर्म्मतिः ॥ २७४ ॥ तेनागत्य तथैवाथ प्रोक्तः
प्रोचे मनीष्यपि। योगशक्तेरचिन्त्यायास्तव मित्र ! किमुच्यते ॥ २७५ ॥ साकूतं तद्वचः श्रुत्वा स्पर्शनेनाथ

१ योगशक्त्या। २ ०प्यथोऽनु० ग० घ०। ३ रोगमुक्तस्य। ४ आधीनः।

चिन्तितम् । बेदः सत्येप मात्रधे रम्पते न हि सर्वथा ॥ २७६ ॥ उचितमात्रमेतेन ततो मह्य विकत्थनम् । युक्त नात्रेति सचिन्त्य स्पर्शनो मौनमाश्रयत् ॥ २७७ ॥ त प स्पर्शनवृत्तान्तं सुखोत्पादनलक्षणम् । स्वमातुः कथयामास दृष्टो बालः परेद्यवि ॥ २७८ ॥ अथाऽकुशलमालाह मयाऽज्ञातेव लक्षितम् । स्पर्शनेन सहानेन संयोगस्तव सुन्दरः ॥ २७९ ॥ किन्त्वेकी ममाप्यस्ति योगशक्तिर्गरीयसी । यत्तस्य दर्शयिष्यामि ततोऽहमपि कौतुकम् ॥ २८० ॥ बालेनोक्ते तर्हि तस्य महत्त्वमभ्यासमाश्रयः । सोपे कथ्यं ततो योगशक्तिस्ते दर्श्यते यदा ॥
॥ २८१ ॥ इतश्च शुभसुन्दर्या मनीषी स्पर्शनस्य तम् । वृत्तान्तं कथयामास ततः साम्येममभ्यधात् ॥ २८२ ॥ वत्स ! योगस्वभावेन पापमिश्रेण नो शुभः । यदेव कारणं दुःखपदवेः परम मतम् ॥ २८३ ॥ मनीषी प्राह नैवात्र विशेष मयमस्त्वया । उचितोऽस्य मया नाहमस्य वचनगोचरः ॥ २८४ ॥ केवलं त्यागकालोऽस्य मयाम्ब ! प्रतिपाल्यते । प्रतिपन्नः सदोषोऽपि नाकाण्डे त्यागमर्हति ॥ २८५ ॥ शुभसुन्दर्ययोचाथ साधु जात ! त्वया कृतम् । अहो ! ते नीतिवेदित्वमहो ! ते दीर्घदर्शिता ॥ २८६ ॥ देवीभ्यामेव वृत्तान्त तमाकर्ण्य नृपोऽपि हि । चित्ते मनीषिणस्तुष्टो रुष्टो बालस्य दूषकैः ॥ २८७ ॥ दिने दिनेऽथ बालोऽपि नितान्तं स्पर्शने रतः । अङ्गीकृतपशुधर्मः कृत्याकृत्याविवेचकः ॥ २८८ ॥ देवतागुरुवन्दारुः कलाभ्यासपराङ्मुखः । विगीतानामकृत्यकलो जातो निरर्गलः ॥ २८९ ॥ युग्मम् ॥ सारसं तं च संवीक्ष्य मनीषी आत्ममोहतः । बहुधा

१ दुः स०, मेदः म० । २ स्पोत्कर्षम् । ३ ०मपि पु० क० प० । ४ लोकनिम्नानिर्भीकः ।

तेनात्यन्तं शिक्षितोऽपि बोढं व्यामूढमानसः । द्यूतकार इव द्यूतं
शिक्षयामास स्पर्शनत्यागहेतवे ॥ २९० ॥ तेनात्यन्तं शिक्षितोऽपि बोढं व्यामूढमानसः । द्यूतकार इव द्यूतं
तत्याज स्पर्शनं न सः ॥ २९१ ॥ तं शिक्षानुचितं ज्ञात्वा तूष्णीकोऽभून्मनीष्यथ । कालदष्टे हि किं कुर्याद्
बलवानपि मान्त्रिकः ॥ २९२ ॥ इतः सामान्यरूपाख्याऽपरा देव्यस्य भूपतेः । अस्ति मध्यमबुद्धिस्तु सुतस्त-
स्याः प्रशस्तधीः ॥ २९३ ॥ गतश्चासीन्नृपादेशाद् देशान्तरमथागतः । स्पर्शनेन सहाद्राक्षीदेष बालमनीषिणौ
॥ २९४ ॥ पृष्टः स्पर्शनवृत्तान्तं बालस्तस्मै न्यवेदयत् । योगशक्तिं स्पर्शनश्च बालप्रोक्तो ददर्श यत् ॥ २९५ ॥
स्पर्शनस्य विधेयोऽभूदेषोऽपि सुखलालसः । वञ्चनाचञ्चुभिः पुम्भिः को न वा विप्रतार्यते ॥ २९६ ॥ अन्यदा
स्पर्शनत्यागकृते स्नेहान्मनीषिणा । शिक्षितस्तत्कथाख्यानाद् दध्यौ मध्यमबुद्धिकः ॥ २९७ ॥ स्वसंवेद्यमिदं
तावन्मम स्पर्शनजं सुखम् । असावपि च नो मिथ्या मनीषी जातु भाषते ॥२९८॥ तत्किं कार्यं मया यद्वा गत्वा
पृच्छामि मातरम् । ध्यात्वेति गत्वा सोऽम्बायास्तं वृत्तान्तमचीकथत् ॥ २९९ ॥ अम्बाप्यूचेऽधुना तावद्युक्ता
मध्यस्थतैव ते । कालान्तरे पुनः पक्षः श्रयणीयो बलाधिकः ॥ ३०० ॥ संशयापन्नचित्तेन भिन्ने कार्यद्वये
यतः । कार्यः कालविलम्बोऽत्र दृष्टान्तो मिथुनद्वयम् ॥ ३०१ ॥ तथाहि—पुरे तथाविधाख्येऽभूदृजुर्नाम
महीपतिः । [2]प्रगुणाऽस्य प्रिया पुत्रो मुग्धाख्यः स्मरसुन्दरः ॥ ३०२ ॥ तस्य चाभूदकुटिला वल्लभा रतिस-
न्निभा । याति प्रीतिमतोः कालो मुग्धाकुटिलयोस्तयोः ॥ ३०३ ॥ वसन्तसमयेऽन्येद्युः स मुग्धः प्रेयसीयुतः ।

१ बाढव्या० ख० । २ प्रगुणा ग० ।

रन्तु पुष्पद्रुमाकीर्णे भवनोपवने ययौ ॥ २०४ ॥ कस्तूरीमेति पुष्पाणां भूत्वा कनकचर्पिकाम् । इत्युक्त्वा क्रीडया यातौ तौ कुर्वेञ्च पृथक् पृथक् ॥ २०५ ॥ कालज्ञविचक्षणाख्यौ तदा व्यन्तरदम्पती । पश्यतः स्माम्बरे यान्तौ मिथुन तद्यथास्थितम् ॥ २०६ ॥ दुर्निवारतयाशाणां रागस्तीव्रोऽभवत्ततः । व्यन्तरस्याकुटिलायां व्यन्तर्यास्तु नृपात्मजे ॥ २०७ ॥ किलैनां वञ्चयामीति मुग्धा प्रोचे विचक्षणाम् । कालज्ञः सोऽथ यदेति ! गच्छ तावत् त्वमग्रतः ॥ २०८ ॥ देवार्चनकृते भूपभवनोपवनादितः । आदाय यावदायामि कुसुमानि कियन्त्यपि ॥ २०९ ॥ तस्यां स्थितायां मौनेन मुग्धलीनमनस्तया । सोऽम्बरादवतीर्यास्तुञ्ज मुग्धवपुर्धितम् ॥ २१० ॥ विमङ्क्षानविज्ञातवपूरीमावकारणः । मुग्धरूपधरः पुष्पपूर्णां स स्वर्णचर्पिकाम् ॥ २११ ॥ निर्वर्ण्याकुटिलाम्य र्भागस्यैतामवोचत । प्रिये ! चिरात् स्थितासीति विलक्षा साप्यभूत्ततः ॥ २१२ ॥ युग्मम् ॥ चल प्रिये ! विपादे नेत्युक्त्वा रन्तुमनाः स च । व्यन्तरम्यसकोऽनैषीत् तामन्तःकदलीगृहम् ॥ २१३ ॥ इतस्तथैव विज्ञातचरित्रा विचक्षणा । सुभग मानयाम्येनमिति चिन्तामरातुरा ॥ २१४ ॥ विधायाकुटिलारूपं भूत्वा कनकचर्पिकाम् । आर्यपुत्र ! चिरोऽस्थीति वदन्ती मुग्धमासदत् ॥ २१५ ॥ युग्मम् ॥ मुग्धः प्राह प्रिये ! मुग्धु मिठोऽस्मि क्षिपतां किमु ! । तावोचत् वदत यस्मि मुग्धः प्रोवाच किं नु तत् ! ॥ २१६ ॥ विचक्षणावदत् याचः परस्मिन्कदली-गृहे । मानयावो विशेषेण रम्यामुपवनश्रियम् ॥ २१७ ॥ मुग्धेन प्रतिपन्ने तौ तदेव कदलीगृहम् । जग्मतुर्मिथुन

१ •क्ये तदा म० । २ •त्तम० त० । ३ च तत् ग० ।

तत्र पूर्वायातमपश्यताम् ॥ ३१८ ॥ अथेक्षितं विस्मिताभ्यां मिथुनाभ्यां परस्परम् । दृष्टः स्वेतरयोर्भेदस्तिलमा-
त्रोऽपि नो पुनः ॥ ३१९ ॥ मुग्धोऽथ चिन्तयामास वनदेवीप्रसादतः । मन्येऽहं द्विगुणो जज्ञे दयितेयं तथा
मम ॥ ३२० ॥ ताताय तदिदं ज्ञाप्यं महाभ्युदयकारणम् । ध्यात्वेति स समाचख्यावितरेषां निजाशयम्
॥ ३२१ ॥ चत्वार्यपि महीभर्तुरास्थानमगमंस्ततः । तान्प्रालोक्य ऋजुर्देवी परिवारश्च विस्मितः ॥ ३२२ ॥
किमेतदिति पृष्टोऽथ सादरं मेदिनीभुजा । वनदेवीप्रसादोऽयमिति मुग्धो न्यवेदयत् ॥ ३२३ ॥ ऋजुराह कथं
वत्स ! सोऽप्याचख्यौ यथास्थितम् । श्रुत्वेति नृपतिर्दध्यावहो ! मे धन्यता परा ॥ ३२४ ॥ अहो ! मे
देवतातुष्टिस्ततो हर्षातिरेकतः । स पुरे परितस्तत्र महोत्सवमकारयत् ॥ ३२५ ॥ द्विगुणत्वाभिमानेन कुमारा-
कुटिले अपि । अभूतां प्रमदोदश्वदुच्चरोमाञ्चकञ्चुके ॥ ३२६ ॥ केलिप्रियतया हृष्टः कालज्ञोऽपि बभूव सः । द्वितीया
वनिता केयमिति किन्तु व्यचिन्तयत् ॥ ३२७ ॥ विभङ्गज्ञानविज्ञातस्वकान्ताचेष्टितस्ततः । स दध्यौ पुनरप्येवं
रुषा परुषिताशयः ॥ ३२८ ॥ मारयामि दुराचारं किममुं राजदारकम् । अमरत्वेन नाकाले निहन्तुं शक्यते
त्वियम् ॥३२९॥ यद्वा ध्यानं न चार्वेतन्निहतेऽत्र यतो ध्रुवम् । मेदज्ञाऽकुटिला नैव मामेषाऽभिलषिष्यति ॥३३०॥
प्रियापि न मया वक्तुं शक्या किमपि सागसा[1] । आदायान्यत्र गच्छामि तत्किं मुग्धवधूमिमाम् ? ॥ ३३१ ॥
एतदप्यत्र नो युक्तमकाण्डगमनाद् यतः । मेदज्ञा भाविनी नेयं मम नापि विचक्षणा ॥ ३३२ ॥ ततः कालविलम्बो-

१ सपापेन ।

त्र विशातु युज्यते मम । ध्यास्येति तस्थौ मौनेन व्यन्तरस्त्यक्तकोपधीः ॥ २३३ ॥ व्यन्तर्यपि तथारूपश्चात्तस्य
प्रियपेशिता । सत्रपा विविधानुज्ञान् कृत्वा तस्थौ यथास्थितिः ॥ २३४ ॥ कुर्वतोर्मर्त्यकृत्यानि कुमाराकुटिला-
ङ्गुपोः । तयोर्व्यन्तरदम्पत्योर्ययौ कालः कियानपि ॥ २३५ ॥ अथ तत्र पुरे मोहविलयाभिधकानने । प्रतिबोधक-
नामाऽऽगात् गुरुर्गुणगुणान्वितः ॥२३६॥ तदागममथाकर्ण्य प्रमनाः पृथिवीपतिः । ससुतादिपरीवारः प्रययौ त विव
न्दिपुः ॥ २३७ ॥ स्वर्णाम्भोजसमासीन नरामरनिषेवितम् । मुनिनाथ महीनाथस्तं पवन्देऽथ भक्तिभाक् ॥२३८॥
यथास्थानं निषण्णेषु निखिलेषु जनेष्वथ । सूरिणा विदधे धर्म्मदेशना मोहनौक्षिनी ॥ २३९ ॥ अथाचार्य
यशोवास्या विधृते मोहदुर्दिने । मनोऽम्भोम्नि व्यन्तरयोर्दर्शनार्कोऽदीप्यत ॥ २४० ॥ अत्रान्तरे तदङ्गाभ्यां रक्त
कृष्णाङ्गनिर्मिता । बीभत्सा भीषणा नि पा नार्येका निर्ययौ बहिः ॥ २४१ ॥ प्रतापमसहा सोढुं निश्शेषाचार्य
भास्वतः । निर्गत्य पर्षदः सा च तस्थौ दूरे पराङ्मुखी ॥ २४२ ॥ पश्चात्तापानलालीढौ सद्यस्तौ व्यन्तरावथ । निव
ऽप यथार्थं नत्वाऽस्यातां मुनीश्वितुः ॥२४३॥ कृपानुभ कथ नाथ ! तदस्मात्पापपङ्कतः । आवयोर्निर्गमो भावी
निःस्वामगवयोरिव ॥ २४४ ॥ भगवानाह भद्राभ्यां खेदः कार्यो न मानसे । न दोषो भवतोः शुद्ध स्वरूपं युव
योर्यतः ॥ २४५ ॥ किन्तु युष्मच्छरीराभ्यां येय स्त्री निर्गताधुना । दोषः सर्व्वपमेतस्याः पापाया विश्वदाश्रयौ ?
॥२४६॥ केयं कथं वा दोषाणां कारण करुणानिधे ! । इति स प्रश्नितस्ताभ्यां भगवानवदत्पुनः ॥ २४७ ॥ महा

१ भन्यदाऽस्मत्पुरे क० ख० घ०, अन्यदाऽस्मिन् पुरे ग० । २ ०नाशनी ख० ग० । ३ ०तप्यत ग० ।

भागौ ! महापापा भोगतृष्णेयमुच्यते । ऐहिकामुष्मिकानर्थश्वापदैकमहाटवी ॥ ३४८ ॥ इयं चात्यन्तदुर्लङ्घ्या विद्यते यावदन्तरा । तावज्जीवाध्वनीनानां कुतो मुक्तिपुरीगतिः ? ॥ ३४९ ॥ इह स्थातुमशक्ता च स्थिता सम्प्रति दूरतः । इयं भवन्तौ मत्पार्श्वात् निर्गच्छन्तौ प्रतीक्षते ॥ ३५० ॥ आवयोर्मुक्तिरेतस्याः कथं नाथ ! भविष्यति । इति पृष्टः पुनस्ताभ्यां भगवानभ्यधादिति ॥ ३५१ ॥ सर्वथेह भवे नेयं युवाभ्यां त्यक्तुमीश्यते । भवद्भ्यां किन्तु सम्यक्त्वं प्राप्तमस्याः क्षयक्षमम् ॥ ३५२ ॥ तत्प्रभावाद् बाधिकेयं भाविनीह भवेऽपि न । भावी भवान्तरे त्वस्या विनाशोऽपि हि सर्वथा ॥ ३५३ ॥ तदाकर्ण्य गुरोर्वाक्यं मुदितौ देवदम्पती । महाप्रसाद इत्युक्त्वा पतितौ तस्य पादयोः ॥ ३५४ ॥ दृष्ट्वा तमथ वृत्तान्तं श्रुत्वा च भगवद्वचः । संवेगं परमं प्रापुर्नृपराज्ञीसुतस्नुषाः ॥३५५॥ यथावृत्तावबोधेन त्रपानुशयवन्ति च । निनिन्दुर्दुष्कृतं स्वं स्वं चित्ते तानि मुहुर्मुहुः ॥ ३५६ ॥ अत्रान्तरे तदङ्गेभ्यो निर्गतैः परमाणुभिः । घटितं विशदं [1]दीप्रं लोचनाह्लाददायकम् ॥ ३५७ ॥ रक्षितानि मया रक्षितानि यूयमिति ब्रुवन् । डिम्भरूपं सप्रमोदं तस्थौ भगवतः पुरः ॥ ३५८ ॥ युग्मम् ॥ अथान्यदसितं निन्द्यं तदन्वेव विनिर्ययौ । तस्मात् तु निरगात् कृष्णं तृतीयमपि भीषणम् ॥ ३५९ ॥ प्रवर्द्धमानं तच्चाथ धूमज्वालावदुच्चकैः । मुष्टिनाहत्य शिरसि प्रकृत्याद्येन धारितम् ॥ ३६० ॥ श्यामवर्णं डिम्भयुग्मं विनिर्गत्याथ पर्षदः । पराङ्मुखं स्थितं दूरे जनयज्जनकौतुकम् ॥३६१॥ भगवानथ राजादीन्यूचे [2]ज्ञात्वा तदाशयम् । भवद्भिर्न हि भद्राणि खेदः कार्यो मनागपि ॥३६२॥

१ दीप्तं लो० ग० । २ ज्ञाततदाशयः ग० ।

यतो न दोषो युष्माकमेष दोषोऽस्य केवलम् । कृष्णस्य डिम्भरूपस्य ज्ञातानन्तरजन्मनः ॥ २६३ ॥ अथ तान्
पिरे नाथ ! किमेतदितरे च के । कथं चाऽद्येनैषमानं तृतीय सिनिवारितम् ॥ २६४ ॥ वाचयमवरोऽप्योचदज्ञान
मिदमुच्यते । येनाजीता जना नैव कृत्याकृत्यं विजानते ॥ २६५ ॥ डिम्भरूप द्वितीय तु कृष्ण पापं निगद्यते ।
अज्ञानाज्जायते यच्च प्रत्यक्षं भवतामदः ॥ २६६ ॥ आदिमं डिम्भरूपं तु क्षीरडिण्डीरसोदरम् । शुद्धाशयकरं श्रेष्ठ-
मिदमार्जवमुच्यते ॥ २६७ ॥ अत एवामुना पापं वर्धमानमनर्थकृत् । यष्टिनाऽस्य शिरसि स्वरूपेणैव धारितम्
॥ २६८ ॥ किञ्चैतदार्जवं येषां धन्यानां वर्धते हृदि । अज्ञानादाचरन्तोऽपि ते पापं स्वल्पपापकाः ॥ २६९ ॥
तदेवंविधमाद्यानां भद्राणां युज्यतेऽधुना । अज्ञानपापे निर्धूय सम्यग्धर्मनिवेशनम् ॥ २७० ॥ ततो भागवतं
वाक्यं श्रुत्वेदममृतोपमम् । संसारवासात् तैः सर्वैः स्वं स्वं चित्तं निवर्तितम् ॥ २७१ ॥ नरेन्द्रोऽथ गुरोः पार्श्वे
देवीसुतपसुतायुतः । शुभाचाराभिधं ज्येष्ठं राज्ये न्यस्याददे व्रतम् ॥ २७२ ॥ डिम्भरूपे ततः कृष्णवर्णे
तूर्णं पलायिते । शुक्लडिम्भ पुनस्तेषां प्रविष्टं तनुषु क्षणात् ॥ २७३ ॥ कुर्वाणावृजुतावादिप्रशंसां व्यन्तरावपि ।
भगवन्तं नमस्कृत्य हृष्टौ स्वं स्थानमीयतुः ॥ २७४ ॥ विवेक मोक्षमप्यापि शरीरे गच्छतोस्तयोः । सुखसम्प
च्चमाहात्म्यात् केवलं सा न चाविका ॥ २७५ ॥ विचक्षणाऽऽह कालज्ञमन्यदा रहसि स्थिता । आर्यपुत्र ! यदा
दृष्टा त्वयार्जवकृतज्ञना ॥ २७६ ॥ तदा किं चिन्तितं ? सोऽपि स्वाभिप्रायं न्यवेदयत् । विचक्षणाऽऽह सत्यस्त्वं
कालज्ञ इति भीयसे ॥ २७७ ॥ युग्मम् ॥ तेनापि पृष्टा सोवाच पर्यालोच्य तदावनम् । कालज्ञः प्राह सत्येन

त्वमप्यत्र विचक्षणा ॥३७८॥ ततः प्रीतिसमायुक्तौ शुद्धसम्यक्त्वलाभतः । कृतार्थौ तौ निजं कालं निन्यतुर्देवदम्पती ॥ ३७९ ॥ तदिदं ते मया पुत्र ! कथितं मिथुनद्वयम् । सन्दिग्धेऽर्थे विलम्बेन कालस्य गुणभाजनम् ॥ ३८० ॥ कालक्षेपस्ततः कर्तुं तवापि सुत ! युज्यते । इति मातृवचः श्रुत्वा मध्यमोऽथ तथाऽकरोत् ॥ ३८१ ॥ इतश्च दर्शयात्मीयं मातर्योगबलं मम । बालेनेत्युक्ताऽकुशलमालाऽविक्षत् तदङ्गके ॥ ३८२ ॥ ततः स्पर्शनमातृभ्यां भृशमाश्रितविग्रहः । अन्त्यजामपि नो नारीं स मुञ्चति नराधमः ॥ ३८३ ॥ ततो लोकैर्निन्द्यमानं मोहान्धीभूतमानसम् । मध्यमो भ्रातृमोहेन बहुधा तमशिक्षयत् ॥ ३८४ ॥ बालः प्राह ध्रुवं भ्रातर्विप्रलब्धो मनीषिणा । स्वर्गे विवर्त्तमानं मां नेक्षसे कथमन्यथा ? ॥ ३८५ ॥ ये मूढा जातिदोषेण कोमलं ललनादिकम् । नेच्छन्ति ते महारत्नं मुञ्चन्ति स्थानदोषतः ॥ ३८६ ॥ ततस्तत्रात्मनो वाचं मेघवृष्टिमिवोषरे । विज्ञाय विफलां मौनं भेजे मध्यमबुद्धिकः ॥ ३८७ ॥ एवं च तिष्ठतां तेषां बालमध्यमनीषिणाम् । अथान्यदा समायातो वसन्तः कृतमन्मथः ॥ ३८८ ॥ ततोऽनङ्गत्रयोदश्यां सार्द्धं मध्यमबुद्धिना । बालो लीलाधरं नाम मित्राम्बायुग् ययौ वनम् ॥ ३८९ ॥ तत्रोत्तुङ्गमनोहारिप्रासादान्तःप्रतिष्ठितः । पूजयित्वा नतस्तेन देवो मकरकेतनः ॥ ३९० ॥ अथ प्रदक्षिणां तस्य ददानो देवसद्मनः । पश्यन्ननङ्गपूजार्थमङ्गनागणमागतम् ॥३९१॥ बालो ददर्श पार्श्वस्थे गुप्तस्थाने व्यवस्थितम् । तस्यैव रतिनाथस्य सुन्दरं वासमन्दिरम् ॥ ३९२ ॥ युग्मम् ॥ कुतूहलवशेनाऽथ द्वारि संस्थाप्य मध्यमम् । स

१ स्पर्शनाऽकुशलमालासहितः ।

तदन्तर्गतोऽपश्यन्महाशय्यां मनोभवः ॥ ३९३ ॥ रतियुक्तेन कामेन क्रान्तमभ्यां सुकोमलाम् । तां च मन्दप्रका-
शत्वादसौ पस्पर्श पाणिना ॥ ३९४ ॥ तस्याः संस्पर्शलोलोऽथ स्पर्शनाभ्यासविलम्बनात् । अविमृश्यापायति
बालस्तस्यां शेते स मूढधीः ॥ ३९५ ॥ अहो ! सुखमहो ! स्पर्श इति सचिन्तयन्नयम् । चकार तत्र शय्यायां
मुहुर्विपरिवर्तनम् ॥ ३९६ ॥ इतश्च नगरे तत्र परिज्ञो नृपोऽपरः । शत्रुमर्दननामाऽस्ति पृथिवीतलविश्रुतः[1] ॥
॥ ३९७ ॥ तस्याग्रमहिषी चारुरूपा मदनकन्दली । तत्र मन्मथपूजार्थमाययौ सपरिच्छदा ॥ ३९८ ॥ गर्भा-
गारस्थित साऽथ पूजयित्वा रतिप्रियम् । वासावासगृहे तत्र त शय्यास्थितमर्चितुम् ॥ ३९९ ॥ तत्र मन्दप्रकाश-
त्वात्कामभ्रान्त्याऽथ बालकम् । चन्दनादिभिरभ्यर्च्य निजावासं जगाम सा ॥४००॥ बालः कोमलहस्ताभ्यसस्पर्शे
तस्या मृगीदृशः । अनुभूयाथ संजातकामावेशो व्यचिन्तयत् ॥ ४०१ ॥ विश्वसारो न जात्वीदृक् स्पर्शः प्राप्तो
मया पुरा । तदिय हा ! हरिणाक्षी कथं संपत्स्यते मम ॥ ४०२ ॥ इति संचिन्तयस्तस्यां शय्यायां स मुहुर्लुठन् ।
आससाद रतिं नैव तप्ताश्मक्षिप्तमीनवत् ॥४०३॥ कथं बालो विनिर्याति नाद्यापीति विचिन्तयन् । मध्यो मेऽप्य
मतोऽभ्राक्षीदथ बाल तथास्थितम् ॥ ४०४ ॥ ततः स चिन्तयामास विवेककलिताशयः । हहा ! बालेन किमि
दमकार्यं कुधिया कृतम् ॥ ४०५ ॥ सुखदापि हि नो देवशय्यासंभोगमर्हति । किन्त्वेषा वन्दनीयेव गुरुपत्नीव
सर्वदा ॥ ४०६ ॥ विचिन्त्येत्यमुना बालो बहुधा बोधितोऽपि हि । नैवोत्तरं ददाति स शय्यासंस्पर्शलालसः ॥

[1] चारुरूपा क० ख० । [2] मध्यक्षितो क० ख० प० ।

॥ ४०७ ॥ अत्रान्तरे च तद्देवकुलाधिष्ठायकः सुरः । तत्रायातः क्रुधा बद्ध्वा तं बालं बहिरक्षिपत् ॥ ४०८ ॥ कुर्वन्
हाहारवं दीनो मध्यस्तदनु निर्ययौ । किं किं किमिति जल्पाको विश्वक् लोकोऽप्यधावत ॥ ४०९ ॥ किमेतदिति
पप्रच्छ मध्यमं संभ्रमाज्जनः । लज्जया स पुनर्नैव किञ्चिदप्युत्तरं ददौ ॥ ४१० ॥ अवतीर्य नरं कश्चिद् व्यन्त
रोऽथ रुपारुणः । बालदुर्नयमाख्याय लोकानामब्रवीदिति ॥ ४११ ॥ भो ! लोकाः ! पश्यतामेव भवतां तदयं
कुधीः । निहन्तव्यो मयेदानीं दण्डसाध्या ह्यमूदृशाः ॥ ४१२ ॥ इत्युक्त्वा स तथा यावत्कुरुते तावदब्रवीत् ।
भ्रातृमोहान्मध्यमस्तं कृपया च जनोऽपरः ॥ ४१३ ॥ प्रसीद मुच्यतां स्वामिन्नेकवारं तपस्व्यसौ । ततस्तत्कृपया
बालं जीवन्तं व्यन्तरोऽमुचत् ॥ ४१४ ॥ आक्रुश्यमानो लोकेन वधबन्धार्दितस्ततः । कृच्छ्रेण स्वगृहं नीतो
बालो मध्यमबुद्धिना ॥ ४१५ ॥ दध्यौ कर्मविलासोऽथ ज्ञात्वा वृत्तमिदं जनात् । कियदेतन्मयि वामे भावि
बालस्य बह्वपि ॥ ४१६ ॥ इतो देहव्यथां पृष्टो बालो मध्यममभ्यधात् । न कापि मम देहार्त्तिर्मनोऽर्त्तिः किन्तु
बाधते ॥ ४१७ ॥ किन्निमित्ता ह्यसौ भ्रातरिति मध्येन भाषितः । कामस्य वामशीलत्वादेषं भूयोऽप्यदोऽब्रवदत्
॥ ४१८ ॥ न वेद्मि किन्तु कन्दर्पवासौकोद्वारि तिष्ठता । किं निर्यान्ती विशन्ती वा कापि स्त्री ददृशे त्वया ?
॥ ४१९ ॥ दृष्टेति मध्यमेनोक्ते बालः पुनरभाषत । तत्किं केयमिति भ्रातर्भवता लक्षिता न वा ? ॥ ४२० ॥
सुष्ठु संलक्षिता सा हि देवी मदनकन्दली । शत्रुमर्दनभूमर्तुरिति मध्योऽब्रवदत्ततः ॥ ४२१ ॥ तदाकर्ण्य कथं सा

१ ०वं भू० क० ख० घ० ।

स्यान्माख्यामिति चिन्तया । दीर्घदीर्घतरानुष्णाभिःश्वासान्बालकोऽमुचत् ॥ ४२२ ॥ तदर्थी सत्यमिति ज्ञात्वा मध्यमधीरय । अचिन्तयदिति स्वान्ते तापवस्यानुरागिता ॥ ४२३ ॥ जनयत्येव सा दृष्टा यतो मदनकन्दली । सौन्दर्यातिशयेनोच्चैरभिलाषं स्वगोचरम् ॥ ४२४ ॥ द्वारस्य संकटत्वेन तस्याः स्पर्शो मयापि च । कामचास गृहद्वारस्थितेनासादितो यदा ॥ ४२५ ॥ कामावस्था ममाप्यासीत् मनाग्दोलायितं मनः । परस्त्रीगमनं युक्त कुलीनानां तथापि न ॥ ४२६ ॥ ततो निवारयाम्येनं बालमस्मात् दुराग्रहात् । ध्यात्वेति मध्यमोऽवादीदिति तं मृदुभाषया ॥४२७॥ दुराग्रहमम्नुं मुञ्च भ्रातर्नीतौ मनः कुरु । यदनीतिफलं दृष्टं सद्योऽपि भवता स्वरात् ॥४२८॥ मोचितोऽसि मया कृच्छ्रात् तस्मिन्सर्वस्व दुर्नयात् । तच्चकारिश्शिरोरत्नकल्पा सा हि नृपप्रिया ॥ ४२९ ॥ लक्षितोऽहं मननेति ज्ञात्वोचे बालकोऽप्यथ । भ्रूपे त्व मोचितोऽसीति न मूपे मारितो भृशम् ॥ ४३० ॥ कन्दर्पप घनैर्भ्रातरम रिप्यं तदा यदि । नैनं प्राप्स्य मनस्ताप मृत्योरप्यधिकं तदा ॥ ४३१ ॥ बालस्य तद् दुराकूतं विनिश्चित्यानिवर्तकम् । मेजेऽथ मध्यमो मौनं ययौ चास्त रविस्तदा ॥ ४३२ ॥ निःसंचारासु रथ्यासु संजातास्वथ बालकः । नृपप्रियां रिरंसुस्तां निर्ययौ निभृतं निशि ॥ ४३३ ॥ घना धकारलुप्तायां रात्रौ कुत्रैष गच्छति । विचिन्त्येति प्रेम्णानुययौ मध्यमोऽपि तम् ॥ ४३४ ॥ अत्रान्तरे च केनापि नरेणागत्य बालकः । निन्ये दीनं रटन् बर्हि वै चैर्वृष्णास्वराम्वना ॥ ४३५ ॥ गमिष्यसि क रे ! दुष्ट ! गृहीत्वा भ्रातरं मम । उच्चैरेवं वदन्मध्यस्तं मुमायन्स

१ ०बन्धे बद्ध्वा० ख० ।

धावत ॥ ४३६ ॥ नगरान्निर्ययौ यावदुद्यतासिरसौ जवात् । लोचनागोचरं तावद्ययौ बालापहारकः ॥ ४३७ ॥
[1]मोक्ष्यत्येष किल क्वापीत्याशया मध्यमोऽथ सः । दीनः कण्टकविद्धांह्रिः क्षुत्पिपासाश्रमाकुलः ॥ ४३८ ॥
स्थाने स्थाने बालवार्त्तां पृच्छन् स्नेहविमोहितः । दिनानि सप्त पर्यट्य पुरं प्राप कुशस्थलम् ॥ ४३९ ॥
युग्मम् ॥ जीर्णकूपं तदभ्यर्णे स दृष्ट्वाथ व्यचिन्तयत् । स्वं क्षिपाम्यत्र किं भ्रातृविकलैरसुभिर्मम ? ॥ ४४० ॥
ध्यात्वेति स्वं क्षिपत्यत्र यावद् बद्ध्वा गले शिलाम् । तावन्नन्दननामा तमद्राक्षीद्राजपूरुषः ॥ ४४१ ॥ सोऽथ मा
साहसमिति ब्रुवन्नेत्य विधृत्य च । प्रोचे मध्यमिदं निन्द्यं [2]कुतोऽध्यवसितं त्वया ? ॥ ४४२ ॥ मध्येन बालविरह-
वृत्तान्तेऽथ निवेदिते । नन्दनः प्राह यद्येवं तर्हि मा खेदमुद्वह ॥ ४४३ ॥ भावी भद्र ! तव भ्रात्रा सार्द्धं प्रायेण
सङ्गमः । मध्येन कथमित्युक्ते नन्दनः पुनरभ्यधात् ॥ ४४४ ॥ स्वाम्यस्माकं पुरेऽत्रास्ति हरिश्चन्द्राभिधो नृपः ।
स चोपद्रूयते क्षुद्रैः सीमभूपतिभिः सदा ॥४४५॥ तैरुपद्रुतमन्येद्युस्तं विलोक्य नरेश्वरम् । तन्मित्रं खेचरो नाम्ना
रतिकेलिरदोऽवदत् ॥ ४४६ ॥ ददामि तुभ्यं भूपाल ! क्रूरविद्यां महाबलाम् । यत्प्रभावात् त्वमेतैर्न रिपुभिः परिभू-
यसे ॥ ४४७ ॥ महाननुग्रह इति क्ष्माभृताभिहितेऽथ ताम् । तस्मै दत्त्वा पूर्वसेवां स नर्पाद्धिमकारयत् ॥ ४४८ ॥
इतो दिनादष्टमेऽह्नि कश्चिन्नीत्वा महीपतिः । विद्यायाः साधनं तस्याः खेचरेण व्यधाप्यत ॥ ४४९ ॥ द्वितीये-
ऽह्नि च स क्ष्मापं पुंसैकेन सहानयत् । होमं चक्रे सप्तरात्रं पुंसस्तस्यासृजा नृपः ॥ ४५० ॥ पुमांसमर्पयामास

१ मोक्षत्येष क० । २ कुतो ध्यव० ग० ।

तं च राजा ममाधुना । स एव च पुमान् भद्र ! भावी भ्राता तव ध्रुवम् ॥ ४५१ ॥ अथोचे मध्यमो भद्र !
पथेयं तर्हि त्वं ध्रुवम् । कृपां कृत्वानयस्वेह यथाहमुपलक्षये ॥ ४५२ ॥ निःश्वासोच्छ्वाससंलक्ष्यजीवितं कृपणा-
कृतिम् । गत्वाथ कृपयोत्पाट्य नन्दनो बालमानयत् ॥ ४५३ ॥ प्रत्यभिज्ञाय तं कृच्छ्रान्मध्यो नन्दनमब्रवीत् ।
स यथार्थं मम भ्राताऽनुगृहीतोऽस्मि त्वया ॥ ४५४ ॥ नन्दनोऽभिदधे राजद्रोहोऽयं त्वत्कृते कृतः । किन्त्वा-
सुजास्य निरूपय विद्यां रौद्र तर्पयिष्यति ॥ ४५५ ॥ इति श्रुत्व मयेदानीं तद् पार्श्वं त्वरितं पुमाम् । मच्चिन्ता
नैव कर्तव्या यद्भाव्यं भवतान्मम ॥ ४५६ ॥ ततो नन्दनमापृच्छ्य बालमुत्पाट्य मध्यमः । क्लेशानासादय-
न्मार्गे तांस्तान् स्वं पुरमागमत् ॥ ४५७ ॥ अनुभूतं त्वया भ्रातः किं दुःखेनेति मध्यमः । मनाग् आतपलं बाल
मालपत्कतिभिर्दिनैः ॥ ४५८ ॥ स प्राह मां तदोत्क्षिप्य त्वत्समक्षं निबध्य च । निन्ये प्रेतवनं प्रेतपतितुल्यः स
खेचरः ॥ ४५९ ॥ तत्राग्निकुण्डपार्श्वस्थः पुमानेको मयेक्षितः । ससंभ्रममुपाचैव खेचरः स च तं मुदा ॥ ४६० ॥
चिन्तितं नृप ! सिद्धं ते पुमान्प्राप्तः सलक्षणः । ततोऽस्यासृक्पलाहुत्या विद्यां मद्धया त्वप ॥ ४६१ ॥ तथेति
प्रतिपद्याथ पृथ्वीनाथः प्रमोदभाक् । विद्यां जपितुमारेभे सहायीकृतखेचरः ॥ ४६२ ॥ मांसमुत्कृत्य मद्देहात्
सकृपाकृष्य च शोणितम् । ददावस्याहुतये राज्ञे खेचरोऽपि स निष्कृपः ॥ ४६३ ॥ रटन्तं मां च संवीक्ष्य नार
कोपमवेदनम् । परमाधार्मिक इव मोदते हृदि खेचरः ॥ ४६४ ॥ घोराट्टहासवेतालकिलकिलासृग्वर्पणादिभिः ।

१ त्वपाकृतिम् । २ राजा ।

विभीपिकाभिर्भूपस्याक्षुभितस्य मनागपि ॥ ४६५ ॥ अष्टाग्रशतजापान्ते सिद्धास्मीति वदन्त्यथ । सा विद्या-
ऽऽविरभूत् [1]तेन [2]नताविक्षच्च तत्तनुम् ॥ ४६६ ॥ युग्मम् ॥ दारिताशेषवर्ष्माणमारसन्तं निरीक्ष्य माम् ।
धराधीशोऽथ सीत्कारमकरोत्करुणापरः ॥ ४६७ ॥ विद्याया एष एवास्याः कल्पः प्रोक्तो यद[3]स्य न । कृपा
कार्येति भाषित्वा खेचरस्तमवारयत् ॥ ४६८ ॥ मम देहमलिम्पच्च विष्वग्लेपेन केनचित् । वागवाच्या मयाऽऽसादि
वेदना महती ततः ॥ ४६९ ॥ लेपानुभावसंजातदवदग्धद्रुमोपमम् । मामुत्पाट्य पुरे तत्र जग्मतुर्नृपखेचरौ ॥
॥ ४७० ॥ जापम[4]म्लाशनोच्छूनतनोर्मे पिशितैः पुनः । सप्तरात्रमदादष्टशतमष्टशतं नृपः ॥ ४७१ ॥ निर्ययौ
जीवितं नेदं हतं मम तथापि हे[5] । तवापि विदिता भ्रातर्मदीयातः परं कथा ॥ ४७२ ॥ मध्यस्तं प्राह
दुःखानां नोचितोऽसि त्वमीदृशाम् । अहो ! खेचरनैष्ठुर्यमहो ! विद्यानृशंसता ॥ ४७३ ॥ [6]तदा च वार्त्ताप्रश्नाय
मनीषी लोक[7]यात्रया । आजगामाकर्णयच्च माध्यमं परिदेवनम् ॥ ४७४ ॥ प्रविश्यान्तस्ततस्ताभ्यां विहितो-
चितसत्क्रियः । मध्यबुद्धिं स पप्रच्छ परिदेवनकारणम् ॥ ४७५ ॥ निःश्वस्य मध्यमोऽप्याख्यत् बालव्यतिकरं
ततः । उद्यानयानादारभ्य यावत् खेचरकर्त्तनम् ॥ ४७६ ॥ पूर्वमेव परिज्ञातसर्वव्यतिकरोऽप्यथ । मनीष्यज्ञ
इव प्राह विस्मयस्मेरलोचनः ॥ ४७७ ॥ किं जातं बालकस्येदृग् यद्वाग्रेऽपि मयोच्यत । स्पर्शनेनामुना सार्द्धं

१ विद्यासाधकेन । २ प्रणता । ३ अस्योपरि इत्यर्थः । ४ अम्लभोजनेन शोफयुक्तशरीरस्य । ५ हि क० ख० ग० घ० । ६ तथा च ग० । ७ ०यानया ग० ।

संगतिः श्रेयसी न ते ॥ ४७८ ॥ बालोऽभवीदथ भ्रातस्तातस्त्वमग्रेसरणाम् । यद्यपि लभे दुःस्थ कियदेतद्वचो
मम ॥ ४७९ ॥ महेच्छानां महाकार्यसाधनोद्यमिनां मनः । दुनोति नान्तरापाति व्यसनं हि कदाचन ॥ ४८० ॥
त त्रिधानुषितं बालं परिहाय मनीष्यथ । नीत्वा कक्षान्तरे मध्यमपदत् मदतां वरः ॥ ४८१ ॥ सौम्य ! यद्येष
जानाति बालो नास्मद्धितं सुधीः । तदस्य ग्रहलग्नेन विनिष्टस्य त्वयापि किम् ? ॥ ४८२ ॥ मध्यमोऽप्यस्य यावत्
भ्रातर्युवोऽहमधुनाऽचिरात् । त्वदाज्ञाप्रतिकूलेन बालेनालमत परम् ॥ ४८३ ॥ अन्यच्च पृच्छयसे विप्र ! विमलो
कमलाकरः । असौ बालस्य वृत्तान्तस्तावेन बुबुधे न वा ? ॥ ४८४ ॥ मनीष्यमिदधे भद्र ! विवेकेन न केवलम् ।
अगाधबोधि किं सर्व समग्रैर्नागरैरपि ॥ ४८५ ॥ तथाहि मधुलोकानां तावद्विदित एव सः । अनङ्गागारवृत्ता
न्वस्तस्य विज्ञास्यते हि किम् ? ॥ ४८६ ॥ गमिष्यसि क रे ! दुष्टेत्यादि स्वाम्यपनेन ये । प्रवादास्तैः खेचरद्वतैर्वृत्ता
न्वस्तु प्रचारितः ॥ ४८७ ॥ श्रुत्वेति मध्यमो दध्यौ प्रच्छन्नमपि निर्मितम् । पाप गर्भ इव व्यक्त व्यक्तीभवति
कालतः ॥ ४८८ ॥ तदस्याच्छादनेच्छा मे मूढस्यत्यन्तता परम् । पटेन हि तिरोधातुं प्रभात केन शक्यते ॥ ४८९ ॥
व्याख्येत्युचे सोदर्यमार्य ! श्रुत्वा कथामिमाम् । त्वया तातेन मातृभ्यां पौरैश्चाचरितं किम् ? ॥ ४९० ॥
मनीषी भाषते साऽथ बाले निर्गुणधुर्यहि । माध्यस्थ्य क्लिश्यमाने च करुणा महती स्थापि ॥ ४९१ ॥ तारमन्या
स्तामतिर्दुष्टसंसर्गामामसुस्थिते । मयजन्तो च मे भद्र ! जाता श्रीविर्गुणाधिके ॥ ४९२ ॥ युग्मम् ॥ दिष्ट्या

१ विनष्टस्य क० ख० ग० । २ पुरन्धरे ।

बालस्य तज्जातं विलोमे[1] मयि यद्भवेत् । इति प्रमुदितोऽकार्षीदट्टहासं पिता पुनः ॥ ४९३ ॥ हा जात ! क गतो-
ऽसीति दैवन्माता[2] त्वामशोचत । नापायो मत्सुतस्याभूदिति मे मुमुदे प्रसूः[3] ॥ ४९४ ॥ बालापहारे पौराणां
प्रीतिर्स्त्वद्गमने[4] कृपा । बभूव पक्षपातश्च स्वस्थानावस्थिते मयि ॥ ४९५ ॥ निर्यातेन मयाऽज्ञायि शर्वर्यां[5] वीरच-
र्यया । तैस्तैः परस्परालापैः पौराणां चरितं त्विदम् ॥ ४९६ ॥ तच्छ्रुत्वा चिन्तयामास मध्यधीर्जातशुद्धधीः ।
अहो ! पुंस्त्वे समानेऽपि नराणां महदन्तरम् ॥ ४९७ ॥ मनीषीव जनैरेके प्रशस्यन्ते यदुत्तमाः । आक्रुश्यन्तेतरां
शश्वदन्ये बाल इवाधमाः ॥ ४९८ ॥ अपरे त्वनुकम्प्यन्ते मादृशा मध्यमा जनाः । ममाप्युत्तमतां लातुं सांप्रतं
सांप्रतं ततः ॥ ४९९ ॥ तदर्थिना मयावश्यं त्यक्तव्या बालसङ्गतिः । नहि दुर्बुद्धिसंपर्कः शुभोदर्काय जायते
॥ ५०० ॥ मध्यधीरिति संचिन्त्य भाषते स्म मनीषिणम्[6] । त्यक्त एव मया भ्रातः ! सङ्गो बालस्य दुर्मतेः
॥ ५०१ ॥ भ्रात्रापि हि किमेतेन विविधानर्थहेतुना । कनकेनापि किं तेन कर्णच्छेदो भवेद् यतः ॥ ५०२ ॥
साधु साध्विति संभाष्य मध्यमापृच्छ्य चाथ तम् । जगाम स निजं धाम मनीषी विदुषां वरः ॥ ५०३ ॥
मध्यमोऽपि बहिर्नैव निर्याति त्रपया तया । ह्रीमतां ह्रीर्बहिश्चारे पदयोः शृङ्खला खलु ॥ ५०४ ॥ इतश्चाकुशल-
माला स्पर्शनेन सहैव हि । बालस्याङ्गाद्विनिर्गत्य सस्नेहं तमभाषत ॥ ५०५ ॥ साधु वत्स ! त्वयाऽलीकजल्पाको
लोकवञ्चकः । निराचक्रे मनीष्येष सत्यं नैन्वसि[7] मे सुतः ॥ ५०६ ॥ स्पर्शनोऽप्यब्रवीदम्ब ! युक्तमेतदमूदृशाम् ।

---

१ प्रतिकूले । २ सामान्यरूपा । ३ माता । ४ त्वदीयगमने । ५ रात्रौ । ६ णे० ख० । ७ तन्नासि ख० ।

एव च मयि मित्रप्रेमानुरागो दर्शितो भृशम् ॥ ५०७ ॥ त्रयाणामपि चेतानीं तुल्या नः सुखदुःखता । अमूर् ये स्वत्र विप्राः स्वस्त्वान् को वा गणयेद् बुधः ॥ ५०८ ॥ बालोऽब्रवीदथ भ्रातो वयमप्येतदेव हि । मनीषी किन्त्व सावेतन्न जानीते विचेतनः ॥ ५०९ ॥ स्पर्शनः प्राह किं तेन सातप्रत्यूहहेतुना । अहमस्मा च ते मित्र ! सुख संपत्तिपनम् ॥ ५१० ॥ एवमेवदिति प्रोक्ते बालकेनाथ तद्वपुः । तथैवाकृष्टलमासास्पर्शनो मेजतुः पुनः ॥ ५११ ॥ स्पर्शनव्यसनोद्भूतः कुमनोरथधूमवान् । स्मरदावानलोऽज्वालीदथ बालमनोवने ॥ ५१२ ॥ ततः प्रदोष एवोक्तः प्रदोषः पुनरप्यसौ । निर्जगाम रिरंसुस्तां देवीं मदनकन्दलीम् ॥ ५१३ ॥ तं निर्यान्तमपश्यच्च मध्यः किन्तु मनीषिणः । यतो विचिन्तयच्चित्ते नोचे किञ्चन चारुधीः ॥ ५१४ ॥ बालोऽथ पृथिवीनाथस्य नागमत् ययौ । लोकान्धकारबाहुल्यात् यामिकैरप्यलक्षितः ॥ ५१५ ॥ मणिप्रदीपपर्यङ्कवितानादिविराजितम् । विवेश सोऽथ तद्वासमन्दिरं विश्वसुन्दरम् ॥ ५१६ ॥ सा च श्वश्रूगृहासन्नप्रसाधनगृहे तदा । आत्मान मुपसन्त्पासीद् देवी मदनकन्दली ॥ ५१७ ॥ ततस्तच्छून्यमालोक्य वेश्मानालोकितायतिः । बालः पल्यङ्क मारोहत् कोमलस्पर्शलालसः ॥ ५१८ ॥ अथ यावत् क्षणीस्तत्र निधायोष्णीषकं पटीम् । सुखमानी लुठत्येष पल्य ङ्कान्तर्लुठापयत् ॥ ५१९ ॥ प्रदोषकर्म निर्माय कृतरक्षोऽङ्गरक्षकैः । तावन्नृपासन्नो वासमन्दिरद्वारमाययौ ॥ ५२० ॥ आगतं च तमालोक्य बालः सम्भ्रान्तमानसः । लुठन् पपात पर्यङ्कादुपलः पर्वतादिव ॥ ५२१ ॥ श्रुत्वाऽऽस्फोटरवं

१ गणयत्यपि स० । २ ०पवनोद्भूतः । ३ मदिवत् । ४ ०र्नृपमा० ग० ।

मध्यगतोऽथैक्षत तं तथा । नृपो व्यचिन्तयच्चायं कथमत्रागतो हतः ॥ ५२२ ॥ उच्छीर्षकपटालोकाद् ज्ञात्वा
शय्याधिरोहणम् । देवीलुब्धोऽसकावित्यकुप्यत् तं प्रति भूपतिः ॥ ५२३ ॥ ततो न्यस्यावटौ[1] पादं चालयित्वा भुजौ
बलात् । बबन्ध बालं भूपालस्तत्पटेनैव रोषणः ॥ ५२४ ॥ विभीषणाभिधानाय तर्दकायाथ तं नृपः । समाहू-
यार्पयामास साक्षेपं तमुवाच च ॥ ५२५ ॥ अरे ! कदर्थनीयोऽयं तथाशेषां निशीथिनीम् । अत्राहमस्य पापस्य
शृणोम्यारटनं यथा ॥ ५२६ ॥ ततः प्रमाणमादेश इत्युक्त्वा स बिभीषणः । बालमाकृष्य केशेषु निन्येऽभ्यर्णा-
ङ्गणावनौ ॥ ५२७ ॥ अयःस्तम्भे निबध्याथ वज्रकण्टकसंकटे । कशाघाततप्ततैलसेचनास्थिभिदादिभिः ॥५२८॥
कदर्थनाभिरत्यर्थमशेषामपि शर्वरीम् । रसन्तं वीरसं बालं तं ततर्द स निर्दयः ॥ ५२९ ॥ युग्मम् ॥ तदा-
क्रन्दरवात् प्रातः श्रवणाच्च परस्परम् । तत्रायातं पुरं सर्वं किमेतदिति कौतुकात् ॥ ५३० ॥ तैथास्थं[2] बालमा-
लोक्य लोकः सर्वो विरागवान् । कथमद्यापि पापोऽयं जीवतीत्याक्रुशद् भृशम् ॥ ५३१ ॥ तदाक्रोशाश्च
बालस्य क्षते क्षार इवाभवन् । बिभीषणोऽप्युपावृत्तं पौराणां पुरतोऽवदत् ॥ ५३२ ॥ ततोऽहो ! धृष्टतास्येति
विद्वेषं बालके भृशम् । प्रययुस्ते नृपं व्यज्ञपयच्चैको महत्तमः ॥ ५३३ ॥ अहितो देवपादानां दुष्टोऽसौ शिक्ष्यतां[3]
तथा । अन्यस्याप्यनये नैवं प्रवृत्तिर्जायते यथा ॥ ५३४ ॥ तस्य चास्ति नरेन्द्रस्य सुरेन्द्रस्येव गीष्पतिः ।
सुबुद्धिर्जिनसिद्धान्तशुद्धधीः सचिवोत्तमः ॥ ५३५ ॥ प्रसाद्यानन्यसाध्येन केनाप्यद्भुतकर्म्मणा । पार्थिवं प्रार्थ-

---

१ ग्रीवायाः पश्चाद्भागः । २ तत्रस्थं ग० । ३ शिष्यताम् क० ख० ग० घ० ।

यामास चतुरः स चरं पुरा ॥ ५३६ ॥ हिंसकर्मणि यत्र । नालोच्योऽहं कदाचन । देशो च स वरं तस्मै नृपति
कविनां वरः ॥ ५३७ ॥ ततश्चैनमनालोच्य सचिवं शुचिचेतसम् । आरक्षानादिदेशोग्रशासनोऽजनिशासन
॥५३८॥ अरे ! पुरे विडम्ब्यैष चतुष्के पुरुषाधमः । हन्यतां त्वरितं दुष्टा निग्राह्या हि महीभुजाम् ॥५३९॥ ते[1] च
रासभमारोप्य प्रख्याप्य च तथा तथा । लोकैराकृष्यमाणं च प्रमोदभरनिर्भरैः ॥ ५४० ॥ विस्तीर्णे नगरे तत्र
सकले सकलं दिनम् । चालकं भ्रमयामासुर्विकृत्या इव मानसम् ॥ ५४१ ॥ युग्मम् ॥ अथ ते नीतवन्तस्तं सन्ध्यायां
वध्यभूमिकाम् । उल्लम्ब्य वटशाखायां ययुः स्थानं जनान्विताः ॥ ५४२ ॥ कथञ्चिद्दैवयोगेनात्रुटद्[2] चालकस्य
पाशकः । पतितो भूतले मूर्च्छां गतो मृत इव स्थितः ॥५४३॥ गत्वा चेतनां कच्छ्रात् प्राप्य कूजन् शनैः शनैः ।
स निजं सदनं भूमिकम्पेन समाययौ ॥ ५४४ ॥ इतश्च मध्यधीचालकश्रान्त लोकवार्तया । प्रातरेव परिज्ञाय
चिन्तयामास चेतसा ॥ ५४५ ॥ पश्यताहो ! मनीष्युक्तचागिविधानाविधानयोः । प्रत्यक्षमिह लोकेऽपि लक्ष्यते
किंपदन्तरम् ॥ ५४६ ॥ यतस्तदुपदेशेन त्यक्तचालकसङ्गतेः । न क्लेशो नापदमाप् मम संप्रति पूर्ववत् ॥
॥ ५४७ ॥ चालस्त्वेवमन्यतस्तद्गीर्भिश्छिन्नीविभ्रमः कुधीः । अगाधे व्यसनाम्भोधौ निमज्जति पुनः पुनः ॥ ५४८ ॥
ततो मम किमप्यस्ति मन्ये भाग्यमभङ्गुरम् । येनाधुनापि संमग्ने गच्छिद्धामिमुखं मनः ॥ ५४९ ॥ एवं चिन्त

१ मयतो वं घ० । २ ०षा पु० क० ख० ग० घ० । ३ तेऽथ रा० क० ग० । ४ ०न्यद् क० ख० ग० ।
५ ०वर्पमिन ख० । ६ नीका ।

यतस्तस्याहोरात्र ताद्वलाङ्कितम्। प्रातर्गत्वामुना २८। बालः स्वं वृत्तमाख्यत ॥ ५५० ॥ शिक्षानर्हस्य
तस्याथ बालस्य परिदेवनम्। कृत्वा मनाग्बहिर्वृत्या स्वावासं मध्यमोऽगमत् ॥ ५५१ ॥ बालोऽपि चूर्णिताशेषदेहो
हतमनोरथः। महीपतिभयादुग्रान्निर्याति न बहिः क्वचित् ॥ ५५२ ॥ अन्यदा च पुरे तत्र प्रबोधनरतिर्गुरुः। निज-
विलसिताभिख्ये कानने समवासरत् ॥ ५५३ ॥ इतश्च स्पर्शनद्वेषिमनीषिहृतमानसः। जगाद भूपतिः कर्मविलासः
शुभसुन्दरीम् ॥ ५५४ ॥ वामोऽहं स्पर्शनावामे तद्वामे दक्षिणः पुनः। स्वरूपमेतन्मे देवि! तावत्ते विदितं
सदा ॥ ५५५ ॥ किञ्चोपकरणं वामाचरणे बालकप्रसूः। दक्षिणाचरणे त्वं तु वर्त्तसे देवि! मे सदा ॥ ५५६ ॥
ततः स्पर्शनरक्तस्य मया बालस्य दर्शितः। स्ववामताफललवस्तत्सवित्रीप्रयोगतः ॥ ५५७ ॥ स्पर्शनप्रतिकूलस्य
त्वत्पुत्रस्य मनीषिणः। निजानुकूलताव्युष्टिविशेषोऽद्यापि नो पुनः ॥ ५५८ ॥ साधुवादानपायादि जज्ञेऽस्य
यदिदं किल। अहमेव त्वयोपेतस्तत्र यद्यपि कारणम् ॥ ५५९ ॥ तथाप्येतावदेवास्य फलं न खलु युज्यते।
तस्याधिकफलप्राप्त्यै देवि! यत्नमतः कुरु ॥ ५६० ॥ शुभसुन्दर्यथोवाच चारु चारूदितं त्वया। देव! देवप्रसा-
दानां मनीषी योग्य एव यत् ॥ ५६१ ॥ देवादेशं करोम्येषाधुनैवेत्यभिधाय सा। योगशक्त्या विवेशाथ गत्वा
वर्ष्म मनीषिणः ॥ ५६२ ॥ तस्याथ जातहर्षस्य सुधासिक्ततनोरिव। निजविलसिते तत्र गमनेच्छा वनेऽभवत् ॥
॥ ५६३ ॥ गच्छामि कथमेकाकी तत्राहमिति चिन्तयन्। स गत्वा मध्यमायाथ निजाकूतमचीकथत् ॥ ५६४ ॥

१ प्रतिकूलः। २ स्पर्शनप्रतिकूले। ३ अनुकूलः। ४ व्युष्टि=फल।

देवः सामान्यरूपापि राज्ञादिष्टामयत् वपुः । मध्यमस्याथ पानेच्छास्याप्यभूत्तत्र कानने ॥ ५६५ ॥ सखायाप्यवश्यं गन्तव्यमिति मध्येन सख्यवा । वाखोऽचालि वशावेऽथ तद्युद्यान त्रयोऽप्ययुः ॥ ५६६ ॥ अथ नानाविधैस्तत्र क्रीडन्तस्ते कुतूहलैः । प्रमोदशेखरं नाम ददृशुर्जिनमन्दिरम् ॥ ५६७ ॥ वन्दारुजनतावारुम्य निमाकर्ण्य दूरतः । विविशुस्ते जिनावासं कौतुकोत्सुकचेतसः ॥ ५६८ ॥ अपश्यन्न तदन्तस्ते देवं नाभिसमुद्भवम् । प्रबोधनरतिं तं च मुनीन्द्रं संघसंयुतम् ॥ ५६९ ॥ मनीषी भाविमग्रस्तात् नत्वा विम्बं जिनेशितुः । सञ्चिन्त्य नतवान् सूरिं पृष्ठलग्नश्च मध्यमः ॥ ५७० ॥ धर्मलाभाशिषा तेन मुनीन्द्रेणाभिनन्दितौ । मुदितावथ तौ भूमौ यथास्थान निषेदतुः ॥ ५७१ ॥ मातृमित्रापवित्रस्तु बालः कस्यापि नानमत् । किन्तु प्राम्याकृतिं विभ्रचि पसादान्तिके तयोः ॥ ५७२ ॥ इतश्चोत्साहितस्तेन सचिवेन सबुद्धिना । इतो मदनकन्दस्याचन्द्रःपुरसमन्वितः ॥ ५७३ ॥ सपौरः सपरीवारस्तमाचार्य विवन्दिषुः । जगाम कानने तत्र शत्रुमर्दनभूपतिः ॥ ५७४ ॥ मुक्त्वाथ राजचिह्नानि प्रणम्य च जिनेश्वरम् । मुनिनाथ महीनाथस्तमवन्दत भक्तिभाक् ॥ ५७५ ॥ सबुद्धिरपि संप्रन्य देवं नत्वाभिजुस्य च । मुनीशं द्वादशावर्तवन्दनेनाभ्यवन्दत ॥ ५७६ ॥ लब्धाशीःषु निषण्णेषु यथास्थान जनेष्वथ । कीर्णकर्णसुधावर्षां विदधे देशनां गुरुः ॥ ५७७ ॥ तां श्रुत्वाह नृपो प्राप किं प्रमोऽत्र सुखार्थिभिः ? । गुरुः प्रोचे जिनप्रोक्तो धर्म्मः धर्म्मनिव धनम् ॥ ५७८ ॥ भूपतिः प्राह यद्येव कथमेते शरीरिणः । धर्म्मं सर्वे न कुर्वन्ति

१ इति खा० ता० । २ ०प्युः ग० । ३ मत्वा ग० । ४ ०नां ग्रा० ग० । ५ ०स्तोचे मु० स० ।

शर्म्मदं शर्म्मकाङ्क्षिणः ॥५७९॥ सूरिरूचे महाराज ! सुकरैव सुखस्पृहा । हृषीकविजितैर्जीवैर्धर्म्मः किन्त्वेष दुष्करः ॥ ५८० ॥ हृषीकाणि च राजेन्द्र ! पञ्चामूनि प्रचक्षते । स्पर्शनं रसना घ्राणं चक्षुः श्रोत्रं तथैव च ॥ ५८१ ॥ इन्द्रोपेन्द्रादयो येऽमी वर्त्तन्ते भुवनेश्वराः । तेप्यमीषां हृषीकाणां सर्वे किङ्करतां गताः ॥ ५८२ ॥ एवं चाख्याय पञ्चार्थी बोधायाथ मनीषिणः । ज्ञानविज्ञाततद्वृत्तः सूरिरूचे विशेषतः ॥ ५८३ ॥ अथवा सन्तु शेषाणि हृषीकाणि जगज्जये । स्पर्शनेन्द्रियमेवैकं समर्थं बत वर्त्तते ॥ ५८४ ॥ अभ्यधादथ भूनाथः किमत्र भुवने क्वचित् । भगवंन्नस्य[1] जेतारः सन्ति केऽपि नरा न वा ? ॥ ५८५ ॥ सूरिराह महीनाथ ! न हि सन्ति न सर्वथा । तादृशा विरलाः किन्तु तत्राकर्णय कारणम् ॥ ५८६ ॥ जघन्यमध्यमोत्कृष्टास्तथोत्कृष्टतमा गुणैः । चतुर्विधा भवन्तीह पुरुषा भुवनोदरे ॥ ५८७ ॥ तत्रानादिभवाभीष्टं यैरिदं स्पर्शनेन्द्रियम् । सदागमोपदेशेन ज्ञायते बहुदोषदम् ॥ ५८८ ॥ गृहस्थैरपि सत्त्वाढ्यैः सन्तोषस्य वशेन यैः । स्पर्शनेन्द्रियलौल्येन क्रियते न कुचेष्टितम् ॥ ५८९ ॥ जित्वा[2] च सर्वथापीदं कर्म्म निर्मूलयन्ति ये ॥ ५९० ॥ ये च निर्वृतिप्राप्त्यावसरमादाय दीक्षां च स्पर्शनेन्द्रियम् । मासाद्य लभन्ते शाश्वतं सुखम् । ते ह्युत्कृष्टतमा भूप ! निर्दिष्टाः शुद्धबुद्धिभिः ॥ ५९१ ॥ कलापकम् ॥ तदा दध्यौ मनीषीति यादृग्भगवतोदितम् । [3]स्पर्शनाक्षं स्पर्शनोऽसौ तादृग्मे प्रतिभासते ॥ ५९२ ॥ तन्नूनं पुरुषव्याजसंस्थितं स्पर्शनेन्द्रियम् । अस्मान्प्रतारयत्येतदन्यथेदृगसौ कथम् ? ॥ ५९३ ॥ तथा भगवतादिष्टा ये चोत्कृष्टतमा

---

१ ०र्षस्तस्य ग० । २ ०त्वाऽथ स० ग० । ३ स्पर्शनेन्द्रियम् ।

नराः। स्पर्शनाख्यानवो मन्ये भवजन्तुस्वभाविषः ॥५९४॥ यतः सोऽपि विशुद्धात्मा सदागमसमागमात्। जित्वा स्वं स्पर्शनं दुष्टं सन्तुष्टः प्राप निर्वृतिम् ॥ ५९५ ॥ मनीषिभिवरां मित्रे भावितस्त्वं विलोक्यसे। ततोऽत्र भवता किञ्चित् किं तत्समाचारितम् ? ॥५९६॥ इति पृष्टोऽथ मध्येन सदा लक्षितचेतसा। मनीषी कथयामास निजाकूतठेदातनम् ॥ ५९७ ॥ युग्मम् ॥ बालस्तु पापकर्मत्वाद् गुरोर्गिरि निरादरः। दिशो दशापीक्षमाणोऽद्राक्षीन्मदन-कन्दलीम् ॥ ५९८ ॥ तां च चन्द्रमुखीं दूरेः पिबन्ती वचनामृतम्। तस्य तास्तः समीपस्थां स दध्यौ मदनातुरः ॥५९९॥ अहो ! रूपमहो ! कान्तिरहो ! सौभाग्यमद्भुतम्। ततोऽनुरूप एवास्यास्तनुस्पर्शः स तादृशः ॥ ६०० ॥ इत्याधनस्पर्शसङ्कल्पनास्तस्य पाप्मनः। प्रवर्द्धन्ते सदा वार्द्धेरिव ग्रीष्मे महोर्मयः ॥ ६०१ ॥ भगवान् पुनरप्याह भूपोत्कृष्टतमा नराः। तावद्वेते मयाख्याता उत्कृष्टानधुना शृणु ॥ ६०२ ॥ बोधप्रभावतः कृत्वा मूलशुद्धिं यथा स्थिताम्। पञ्चके ये सजन्त्यत्र न जातु स्पर्शनेन्द्रिये ॥६०३॥ शरीरस्थितये किञ्चिदाचरन्तोऽपि तत्प्रियम्। ये च गृद्धेरभावेन भवन्ति सुखभाजनम् ॥६०४॥ गुणानुरागिणो दोषभीरुका लोकवल्लभाः। परोपकारनिरता कृतज्ञाश्च भवन्ति ये ॥ ६०५ ॥ देवतागुरुतत्त्वानि स्वधिया ये च जानते। उत्कृष्टास्ते नराः प्रोक्ताः कृतिभिः पृथिवीपते ! ॥ ६०६ ॥ कलापकम् ॥ अथ दध्यौ मनीषीति पारमार्थ्यापि सूरिभिः। उत्कृष्टचरितं तादृक् किञ्चिदात्मनि भाति मे ॥ ६०७ ॥ मध्योऽपि दध्यौ वाच्या गुरुणा वर्णिता गुणाः। उत्कृष्टानां घटन्तेऽत्र ते सर्वेऽपि महाप्रजे

१ तथा भवम्—धयावनम्। २ नृपो० स०। ३ तथाख्याता ता० क० स० प० ।

॥६०८॥ गुरुराह नरेन्द्रैवमुत्कृष्टाः कथिता नराः । मध्यमानां स्वरूपं यत्तदिदानीं निशम्यताम् ॥६०९॥ भोगानेके
प्रशंसन्ति प्रणिन्दन्ति पुनः परे । किं कर्त्तव्यमतोऽस्माभिरिति मुह्यन्ति ये किल ॥ ६१० ॥ कालक्षेपं विधायाथ
स्पर्शनाक्षे सुखैषिणः[1] । येऽनुकूला भवन्त्यत्र किन्तु नात्यन्तलम्पटाः ॥ ६११ ॥ बुधोपदेशं नादृष्टदुःखाः कुर्वन्ति
सर्वथा । यदा स्युर्दृष्टदुःखास्तु तदा ये च प्रकुर्वते ॥ ६१२ ॥ देवतागुरुतत्त्वानि बुधोक्ता[2] ये च जानते । तज्ज्ञै-
र्नरा नराधीश ! मध्यमास्ते प्रकीर्तिताः ॥ ६१३ ॥ कलापकम् ॥ दध्यौ मध्योऽथ मध्यानां सूरिणा ये गुणा-
गुणाः । गदितास्ते स्वसंवेद्या ममापि निजगोचरे ॥ ६१४ ॥ मनीष्यपि तदाध्यायदादिष्टं गुरुणा स्फुटम् ।
चरितं मध्यमानां यत्तन्मदीयेऽनुजे स्थितम् ॥ ६१५ ॥ सूरिरूचे समाख्याता मध्यमा मानवा इति । जघन्यनरस-
म्बन्धिस्वरूपमधुनोच्यते ॥ ६१६ ॥ तत्त्वतः शत्रुरूपेऽपि येऽमुष्मिन् स्पर्शनेन्द्रिये । बन्धुबुद्ध्या प्रवर्त्तन्ते मोहान्धी-
भूतबुद्धयः ॥ ६१७ ॥ कृत्याकृत्यविवेकाज्ञा निस्त्रपाः कुलदूषणाः । नानापायसमालीढाः कुशीला लोकगर्हिताः
॥ ६१८ ॥ देवतागुरुतत्त्वानां प्रत्यनीका दुराशयाः । भवन्ति ये च भूपाल ! जघन्यास्ते नराः स्मृताः ॥ ६१९ ॥
॥ विशेषकम् ॥ अथेति दध्यतुश्चित्ते मध्यबुद्धिमनीषिणौ । इदं सूरिवचः सर्वं बालेऽत्र घटते स्फुटम् ॥ ६२० ॥
सूरिराह तदेवं ते जघन्याः कथिता नराः । भूयांस एव भूमीश ! ते चात्र भुवनोदरे ॥ ६२१ ॥ शेषास्तु
गणिता एव सकलेऽपि जगत्त्रये । स्पर्शनेन्द्रियजेतारो नरेन्द्र ! विरलास्ततः ॥६२२॥ तथेति प्रतिपन्नेऽथ गुर्वादेशे

१ सुखेषिणः ग० । २ बुधोक्त्या ये ग० ।

महीपता। सुबुद्धिसचिवो वाचमूचाथ रचिताञ्जलिः ॥ ६२३ ॥ जघन्यमध्यमोत्कृष्टास्तथोत्कृष्टतमा नराः। यथानुपूर्व्या व्याख्याता च एते भगवन्। किल ॥ ६२४ ॥ एवंविधस्वरूपास्ते प्रकृत्यैव भवन्ति किम्?। स्वरूपजनक कारण चास्ति किञ्चन? ॥ ६२५ ॥ भगवानाह मन्त्रीश! प्रकृत्या नेदृशा अमी। ईदृक्स्वरूपजनक कारण किन्तु विद्यते ॥ ६२६ ॥ तत्रोत्कृष्टतमास्तावत् ये नराः प्रतिपादिताः। उत्कृष्टेभ्यः कृतार्थत्वात् भिन्नास्ते न तु तत्त्वतः ॥६२७॥ यतस्त एव निःशेषं कर्म्म निर्मूल्य मूलतः। यदा निर्वृतिमायान्ति तदोत्कृष्टतमाः स्मृताः ॥ ६२८ ॥ तेषां च तत्र शुद्धानां स्वरूपेण व्यवस्थितेः। जनको जननी चापि विद्यते नैव कश्चन ॥ ६२९ ॥ जायन्ते कर्म्मवैचित्र्यादितरे संसृतौ पुनः। स एवैषामतः कर्म्मविलासो जनको मतः ॥ ६३० ॥ शुभाशुभससामान्यभेदात्कर्म्म च त्रिधा। सुन्दरी हि शुभत्वेन तत्र या कर्म्मपद्धति ॥ ६३१ ॥ पक्षा अकुशलमाला च या च सामान्यरूपिका। उत्तमाधममध्यानां जनन्यस्ता यथाक्रमम् ॥ ६३२ ॥ युग्मम् ॥ तथ्यौ मध्याधमावेतौ साम्यमेतैः सहोदितम्। न केवलं गुणैः किन्तु पितृभिश्चापि धारिणा ॥ ६३३ ॥ उत्कृष्टस्य पुनर्य्यं भवजन्तुषु निश्चितम्। पितरौ स्पर्शनेनोक्तौ यतस्तस्य न कश्चपि ॥ ६३४ ॥ जननीजनकौ परिवर्जितावेव नः पुनः। नियतं पूर्वनिर्णीतरूपा एव यथं ततः ॥ ६३५ ॥ मन्त्र्यूचे भगवन्नेषां नराणां रूपमीदृशम्। शुभमेव सदा यस्मात् परावर्तोऽपि संभवेत्? ॥ ६३६ ॥ मुनीन्द्रोऽभवदुत्कृष्टतमानां वीतकर्म्मणाम्। शुभमेव सदा रूपमन्येषां भद्र! नो पुनः ॥ ६३७ ॥ यतस्ते भद्रगाः कर्म्मविलासस्य सुनिश्चितम्। स स्वन्योन्य

परावर्त्तं करोत्येषां निजेच्छया ॥ ६३८ ॥ मनीष्यथ पुनर्दध्यावदोऽपि घटते स्फुटम् । यतो विषमशीलोऽयमस्माकं
जनको ध्रुवम् ॥ ६३९ ॥ यतो य एष बालस्य स्वसूनोरपि सर्वथा । व्यसनान्येवमाधत्ते सोऽन्यस्मै स्यात्कथं हितः
॥ ६४० ॥ सुबुद्धिः पुनरप्याह विशदीभवदाशयः । भगवन् ! कस्य माहात्म्यात् स्युरुत्कृष्टतमा नराः ?
॥ ६४१ ॥ सूरिरूचे न कस्याप्यन्यस्य किन्तु स्ववीर्यतः । तदवाप्तेरुपायस्तु भावदीक्षाऽऽर्हती मता ॥ ६४२ ॥
उत्कृष्टतमताहेतुर्दीक्षेयं युज्यते मम । एवं मनीषी चारित्रपरिणामं तदाऽभजत् ॥ ६४३ ॥ मन्त्र्यूचे नाथ !
योऽस्माभिर्गृहिधर्म्मो विधीयते । उत्कृष्टतमताहेतुः स सम्भवति वा नवा ॥ ६४४ ॥ स प्राहोत्कृष्टतमतां साक्षादेषा
जिनोदिता । प्रव्रज्या साधयत्युच्चैरयं तु व्यवधानतः ॥ ६४५ ॥ तत् श्रुत्वा चिन्तयामास मध्यबुद्धिर्विशुद्धधीः ।
युक्तो ममैषोऽनुष्ठातुं गृहिधर्मो जिनोदितः ॥ ६४६ ॥ इतश्च तत्तत्संकल्पकल्पनाकुलचेतसः । विस्मृतात्मस्वरूपस्य
बालस्याजनि शून्यता ॥ ६४७ ॥ भूताविष्ट इवाश्लेष्टुं दुष्टस्तां स नृपप्रियाम् । ततो विमुक्तमर्यादस्तत्संमुखमधावत
॥६४८॥ अकाले तुमुलोत्ताले जने जातेऽथ संभ्रमात् । तं क्ष्मेन्द्रः क्षुद्रमद्राक्षीद् दिक्षु चक्षुः क्षिपन् क्षणात् ॥६४९॥
प्रत्यभिज्ञाय विज्ञाय तदाकूतं दृगिङ्गितैः । उच्चैश्चकार हुङ्कारं नृपः कोपारुणेक्षणः ॥ ६५० ॥ बालकोऽथ समुद्भूत-
भीतिर्वीतस्मरज्वरः । आयातचेतनः पश्चात् नश्यन् दीनोऽपतद् भुवि ॥६५१॥ आविर्भूय स्पर्शनोऽपि निर्ययौ सूर्यव-
ग्रहात् । बालं प्रतीक्षमाणश्च तस्थौ दूरे पैराङ्मुखः ॥६५२॥ तेन बालचरित्रेण ह्रीणौ मध्यमनीषिणौ । महात्मानो

१ °दा क० ख० ग० घ० । २ आचार्यविग्रहात् । ३ पराङ्मुखम् क० ख० ग० ।

महीयसा । सुबुद्धिसचिवो वाचमुवाच रचिताञ्जलिः ॥ ६२३ ॥ अधन्यमध्यमोत्कृष्टास्तथोत्कृष्टतमा नराः ।
यथानुपूर्व्या व्याख्याता य एते भगवन् ! किल ॥ ६२४ ॥ एवंविधस्वरूपास्ते प्रकृत्यैव भवन्ति किम् ? ।
ईदृक्स्वरूपजनकं कारणं वास्ति किञ्चन ? ॥ ६२५ ॥ भगवानाह मन्त्रीश ! प्रकृत्या नेदृशा अमी । ईदृक्स्व
रूपजनकं कारणं किन्तु विद्यते ॥ ६२६ ॥ तत्रोत्कृष्टतमास्तावद् ये नराः प्रतिपादिताः । उत्कृष्टेभ्यः कृतार्थत्वाद्
भिन्नास्ते न तु तत्त्वतः ॥६२७॥ यतस्त एव निःशेषं कर्म्म निर्मूल्य मुक्तकाः । यदा निर्वृतिमश्नन्ति तदोत्कृष्टतमाः
स्मृताः ॥ ६२८ ॥ तेषां च तत्र मुक्तानां स्वरूपेण व्यवस्थिते । जनको जननी चापि विद्यते नैव कश्चन
॥ ६२९ ॥ जायन्ते कर्म्मवैचित्र्यादितरे संसृतौ पुनः । स एवैषामतः कर्म्मविलासो जनको मतः ॥ ६३० ॥
शुभाशुभसामान्यभेदात्कर्म्म च त्रिधा । सुन्दरी हि शुभत्वेन तत्र या कर्म्मपद्धतिः ॥ ६३१ ॥ परा
अकुशलमाला च या च सामान्यरूपिका । उपमाधममध्यानां जनन्यस्ता यथाक्रमम् ॥ ६३२ ॥ युग्मम् ॥
तथ्यो मध्याधमोऽस्माकं साम्यमेतैः सहोदितम् । न केवलं गुणैः किन्तु पितृभिश्चापि सदृशा ॥ ६३३ ॥
उत्कृष्टतम एवार्थं भवभन्तुम निश्चितम् । पितरौ स्पर्धनेनोक्तौ यतस्तस्य न कावपि ॥ ६३४ ॥ जननीजनकौ
परिकल्पिताविव नः पुनः । नियतं पूर्वनिर्मितरूपा एव वयं ततः ॥ ६३५ ॥ मन्यसे भगवन्नेषां नराणां
रूपमीदृशम् । शुभमेव सदा यद्वा परावर्त्तोऽपि संभवेत् ? ॥ ६३६ ॥ मुनीन्द्रोऽवदत्कृष्टतमानां वीतकर्म्मणाम् ।
शुभमेव सदा रूपमन्येषां भद्र ! नो पुनः ॥ ६३७ ॥ यतस्ते चञ्चगाः कर्म्मविलासस्य सुनिश्चितम् । स स्वन्योन्य

परावर्त्तं करोत्येषां निजेच्छया ॥ ६३८ ॥ मनीष्यथ पुनर्दध्यावदोऽपि घटते स्फुटम् । यतो विषमशीलोऽयमस्माकं जनको ध्रुवम् ॥ ६३९ ॥ यतो य एष बालस्य स्वसूनोरपि सर्वथा । व्यसनान्येवमाधत्ते सोऽन्यस्मै स्यात्कथं हितः ॥ ६४० ॥ सुबुद्धिः पुनरप्याह विशदीभवदाशयः । भगवन्! कस्य माहात्म्यात् स्युरुत्कृष्टतमा नराः ? ॥ ६४१ ॥ सूरिरूचे न कस्याप्यन्यस्य किन्तु स्ववीर्यतः । तदवाप्तेरुपायस्तु भावदीक्षाऽर्हती मता ॥ ६४२ ॥ उत्कृष्टतमताहेतुर्दीक्षेयं युज्यते मम । एवं मनीषी चारित्रपरिणामं तदाऽभजत् ॥ ६४३ ॥ मन्त्र्यूचे नाथ! योऽस्माभिर्गृहिधर्म्मो विधीयते । उत्कृष्टतमताहेतुः स सम्भवति वा नवा ॥ ६४४ ॥ स प्राहोत्कृष्टतमतां साक्षादेषा जिनोदिता । प्रव्रज्या साधयत्युच्चैरयं तु व्यवधानतः ॥ ६४५ ॥ तत् श्रुत्वा चिन्तयामास मध्यबुद्धिर्विशुद्धधीः । युक्तो ममैषोऽनुष्ठातुं गृहिधर्मो जिनोदितः ॥ ६४६ ॥ इतश्च तत्तत्संकल्पकल्पनाकुलचेतसः । विस्मृतात्मस्वरूपस्य बालस्याजनि शून्यता ॥ ६४७ ॥ भूताविष्ट इवाश्लेष्टुं दुष्टस्तां स नृपप्रियाम् । ततो विमुक्तमर्यादस्तत्संमुखमधावत ॥६४८॥ अकाले तुमुलोत्ताले जने जातेऽथ संभ्रमात् । तं क्ष्मेन्द्रः क्षुद्रमद्राक्षीद् दिक्षु चक्षुः क्षिपन् क्षणात् ॥६४९॥ प्रत्यभिज्ञाय विज्ञाय तदाकूतं दृगिङ्गितैः । उच्चैश्चकार हुङ्कारं नृपः कोपारुणेक्षणः ॥ ६५० ॥ बालकोऽथ समुद्भूतभीतिर्वीतस्मरज्वरः । आयातचेतनः पश्चात् नश्यन् दीनोऽपतद् भुवि ॥६५१॥ आविर्भूय स्पर्शनोऽपि निर्ययौ सूर्यवप्रहात्[2] । बालं प्रतीक्षमाणश्च तस्थौ दूरे पैराङ्मुखः[3] ॥६५२॥ तेन बालचरित्रेण ह्रीणौ मध्यमनीषिणौ । महात्मानो

---

१ °दा क० ख० ग० घ० । २ आचार्यवप्रहात् । ३ पराङ्मुखम् क० ख० ग० ।

हि लेक्षन्ते परस्यापि कुचेष्टितैः ॥ ६५३ ॥ ततः कोऽस्य वराकस्योपरि कोपो विधीयते । विचिन्त्येति नृपः
शान्तीभूतः सूरिमदोऽवदत् ॥ ६५४ ॥ अभक्ष्यमशक्यमविचार्यमलौकिकम् । भगवन्नस्य पापस्य पुंसः किमपि
चेष्टितम् ॥ ६५५ ॥ चानन्त्येवाथवा पूज्या विमलज्ञानशालिनः । यदनेन पुराऽकारि प्रकृत्य यच्च संप्रति ॥६५६॥
पूर्वक चरित चास्य संभाव्येतापि कर्हिचित् । प्रत्यक्षमप्यश्रद्धेयं सर्वथा त्वधुनातनम् ॥ ६५७ ॥ रागादिध्वान्त-
तिग्मांशो त्वयि सन्निहिते यतः । ईदृशोऽध्यवसायोऽतिक्षुद्राणामपि किं भवेत् ? ॥ ६५८ ॥ सूरिराह महाराज !
न कर्त्तव्योऽत्र विस्मयः । यतोऽमुष्य वराकस्य दोषो नैव मनागपि ॥ ६५९ ॥ विप्रहावस्य निर्गत्य निर्गतो मद
यत्प्रसादात् । योऽयं सर्वसमाप्त्यर्थं दोषस्तस्यैव केवलम् ॥ ६६० ॥ स्पर्शनाख्य मयाऽऽस्यापि यदिदानीं सुदुर्जयम् ।
भूप ! तद्रूप प्रभाव स्पर्शनः प्रतिपद्यताम् ॥६६१॥ ततो नास्त्येव दुष्कर्म तल्लोके सकलेऽपि हि । कुर्वन्ति यन्न तो
नैव यदस्य वशवर्तिनः ॥ ६६२ ॥ अथ चाक्षलमालाबनन्याविष्टविग्रहः । स्पर्शन शत्रुभप्येन मन्यते मित्र
मुत्तमम् ॥ ६६३ ॥ किञ्च देहभृतां सोपक्रमं च निरुपक्रमम् । कर्म्म द्विविधमुर्वीश ! वर्णितं सर्ववेदिभिः ॥६६४॥
तत्र सोपक्रम साधुसन्निधानादिहेतुभिः । क्षयक्षयोपशमोपशममार्यं प्रपद्यते ॥ ६६५ ॥ सन्निधाने जिनस्यापि
न पुनर्निरुपक्रमम् । ध्वान्तविध्वंसनेऽन्धस्य न भास्वानपि हि क्षमः ॥ ६६६ ॥ अपन्यनररूपस्य निरुपक्रम
कर्म्मणः । अस्य दुश्चरितैर्भूप ! कार्यस्तस्मान्न विस्मयः ॥ ६६७ ॥ मन्युयाचेवमेवेद किन्तु वेधोऽधुना प्रभो ! ।

१ कम्पन्ते क० स० प० । २ ध्याम्य वि० क० प० ।

युष्मत्प्रसादेनेदक्षान् विचारानवभोत्स्यते ॥ ६६८ ॥ तं प्रशस्य महामात्यमथावसरभाषिणम् । बालोदर्के मही-
नाथः पप्रच्छ स्वच्छधीर्गुरुम् ॥ ६६९ ॥ गुरुरूचे महाराज ! गतेषु भवदादिषु । लब्धसंज्ञममुं बालं स्पर्शनोऽसौ
श्रयिष्यति ॥ ६७० ॥ त्वद्भयादथ बालोऽयमत्र स्थातुमशक्नुवन् । अटव्यादिष्वटन् गन्ता कोल्लाके सन्निवेशने
॥ ६७१ ॥ तत्र कर्म्मपुरकाख्यग्रामासन्नं सरोवरम् । श्रमोदन्यार्दितश्चायं मज्जनाय समेष्यति ॥ ६७२ ॥
इतश्च तत्र मातङ्गमिथुनं किञ्चिदेष्यति । हनिष्यति च मातङ्गस्तीरद्रुमपतत्रिणः ॥ ६७३ ॥ विजनत्वात् तु
मातङ्गी सरः स्नानाय वेक्ष्यति । सैन्द्रक्ष्यति तदा चैनं तीरदेशमुपागतम् ॥ ६७४ ॥ अथ सा स्पृश्यपुंसोऽस्मा-
त्सरोवतरणागसा । भीता निमज्य संस्थाता पद्मपत्रतिरोहिता ॥ ६७५ ॥ सरोऽवतीर्य तत्पार्श्वं गतोऽनाभोगतस्ततः ।
असावपि हि चण्डालीशरीराश्लेषमाप्स्यति ॥ ६७६ ॥ तस्यां जाताभिलापस्यामुष्य सा श्वपची ततः ।
कथयिष्यति पृथ्वीश ! चण्डालस्त्रीत्वमात्मनः ॥ ६७७ ॥ तथाप्येष बलात्पापस्तदाश्लेषं विधास्यति । मा तु
हाहारवं कर्त्ता(०र्त्री) संभ्रमभ्रान्तमानसा ॥ ६७८ ॥ समेष्यति तमाकर्ण्य संभ्रान्तस्तत्पतिर्जवात् । प्रज्वलिष्यति
कोपेन दृष्ट्वा चैनं तथास्थितम् ॥ ६७९ ॥ आकर्णाकृष्टकोदण्डः कम्पमानममुं ततः । स हन्तैकेन बाणेन कुरङ्ग-
मिव लुब्धकः ॥ ६८० ॥ मृत्वाथ नरके घोरे गन्तोद्धृत्तस्ततोऽप्यसौ । अनन्तकालं भूपाल ! भ्रमिष्यति भवोदधौ

१ श्रमोदन्याभिभूतोऽयम् क० ख० ग० घ० । २ उदन्या=तृषा । ३ सा द्रक्ष्यते तदा क० ख०ग० ।
४ चाण्डाली ।

॥ ६८१ ॥ रागोपेक्ष्य कलमालास्पर्शनौ नाथ ! दारुणौ । पक्षपातेनास्य संपन्नमिव संपत्स्यते तथा ॥ ६८२ ॥
न रूपेक्ष्य कलमालास्पर्शनौ ममवमिमौ । एकस्यास्यैव पुंसः किमुतान्येषामपि प्रभु ! ॥ ६८३ ॥ सूरिराह
महामात्य ! सर्वेषां भववासिनाम् । समर्थौ योगिनावेतौ मुख्यकारणं केवलम् ॥ ६८४ ॥ आविर्भावतिरोभावरूपा
स्थानविक्षेपतः । योगिनां च भवस्येव शक्तिर्विस्मयकारिणी ॥६८५॥ रागोपे ममवन्नेतौ किमस्माकमपि प्रभु ! ।
धरिमा वाक्‌मित्युक्ते नृपः सचिवमभ्यधात् ॥ ६८६ ॥ इद ममवता शावकादिष्टमधुना सखे ! । स्पर्शनाकुलमाले
चद् सहानेन यास्यतः ॥ ६८७ ॥ ततः पश्चाचमाकार्यं पर्यैते न रिपू पुनः । येषु मे विगतो येन सस्यः स्यां
शत्रुमर्दनः ॥ ६८८ ॥ दृष्टस्यादय भूयोऽपि पर्यैते विश्वतस्तदा । निष्पीड्ये लोहयन्त्रेण हित्वार्येष कृपालुताम्
॥ ६८९ ॥ मुक्त यद्यपि नो वक्तुमिव ममपतोऽन्तिके । तथापि रागधर्मोऽयमित्यादिष्टमिदं तव ॥ ६९० ॥
म श्री दृष्यापहो ! वेषस्यानयोरुपरि क्रुधा । हिंसाकर्मानियोग यद्यमपि व्यसमरद् वरम् ॥ ६९१ ॥ भवत्वेव
तथापीद गुरवो बोधकारणम् । कल्पयिष्यन्ति मे त्वाज्ञाप्रतिपत्तिः परं वरा ॥ ६९२ ॥ व्यास्येति स नृपादश
तथेति प्रतिपन्नवान् । धरित्र्ये च भूमीश विक्षेपाद् योषोत्सवे ॥ ६९३ ॥ एवमाज्ञापनेनालमनयोरन्तरज्ञयोः ।
भयमुन्मूलनोपायो न यत सरलाशय ! ॥ ६९४ ॥ किन्त्वहिंसासमीचीनास्तेयाद्यैः साधनैर्धवम् । अन्तरङ्गद्विषां
कालयवनोदरतोऽरम् ॥ ६९५ ॥ महासत्त्वमनेर्विषमप्रमादास्यमेतयोः । अन्तरङ्ग लोहयन्त्र समूलोन्मूलनक्षमम्

१ कोपः । २ •सत्त्वाभीर्वाणी ।

॥ ६९६ ॥ युग्मम् ॥ एतन्निष्पीडनाकाङ्क्षा ततो यद्यस्ति ते नृप ! । स्ववीर्ययष्ट्याऽवष्टभ्य तद्यन्त्रं वाह्यतां स्वयम्
॥ ६९७ ॥ तदा च भगवद्वाणीवात्यया ववृधेऽधिकम् । कर्म्मद्रुदाही चारित्रभाववह्निर्मनीषिणः ॥ ६९८ ॥ मना-
कृसंजातसंदेहः प्रत्युवाच गुरुं स च । प्रभो ! भागवती दीक्षा या पूर्वं प्रतिपादिता ॥ ६९९ ॥ यदप्रमादयन्त्रं च
संप्रति प्रतिपाद्यते । अन्योन्यमनयोः कोऽपि विशेषो विद्यते न वा ? ॥७००॥ युग्मम् ॥ शब्दभेदाद्विशेषोऽन्यो
नास्तीति गुरुणोदिते । मनीष्यथ पुनर्वाचमुवाच विनयाञ्चिताम् ॥७०१॥ तर्हि प्रसीद मे नाथ ! संसारोरगजाङ्गु-
लीम् । तूर्णं भागवतीं दीक्षां देहि यद्यस्ति योग्यता ॥७०२॥ सूरिराह भृशं योग्योऽसीति सुष्ठु प्रदीयते । अथोवाच
नृपः कोऽयं भगवन् ! सात्त्विकाग्रणीः ? ॥७०३॥ मादृशै रणनिर्व्यूढसाहसैरपि दुर्वहा । दीक्षाधूरभ्युपगता धुर्यप्रेङ्खेन
लीलया ॥ ७०४ ॥ भगवानप्युवाचैवं विशामीश ! निशम्यताम् । राजा कर्म्मविलासोऽस्ति भोक्तास्य नगरस्य ते
॥७०५॥ तस्याग्रमहिषीशुभसुन्दरीकुक्षिसंभवः । सूनुर्मनीषिनामायं गुणरत्नैकरोहणः ॥ ७०६ ॥ तस्यैवाकुशलमा-
लाकुक्षिजो बाल एष च । तथा सामान्यरूपाभूर्मध्योऽभ्यर्णे मनीषिणः ॥ ७०७ ॥ राज्ञाथ विस्मितेनोचे भोक्ता-
मुष्य पुरस्य किम् । कर्म्मविलासो नृपतिर्न पुनर्भगवन्नहम् ? ॥ ७०८ ॥ सूरिराह महाराज ! स एवात्र ध्रुवं प्रभुः ।
यतस्तदाज्ञां कुर्वन्ति पौराः सर्वेऽपि विभ्यतः ॥ ७०९ ॥ स्वेच्छया राज्यमादातुं दातुं वा जगतीपतिः । तवापि
स प्रभुः स्थामविनिर्जितजगत्त्रयः ॥ ७१० ॥ यद्येवं भगवन्नेष कस्मान्नेहोपलभ्यते ? । इति क्षितीश्वरेणोक्ते जगाद

१ ०याश्रितः ख० । २ ०वद् येन ता० ग० । ३ एव च ता० ग० ।

गणभृत्पुनः ॥७११॥ राजन् ! कर्म्मविलासोऽयमन्तरङ्गो नरेश्वरः । नान्तरङ्गा हि लोकाः स्युर्दृश्याः पथि भवादृशाम् ॥७१२॥ केवलं गुप्तरूपेण सर्वकार्याणि कुर्वतः । पश्यन्ति बुद्धिदृष्ट्यैव ज्ञानस्वच्छतबुद्धयः ॥७१३॥ अथ विज्ञातवत्त्वेन प्रोचे राजा शुभ्रबुद्धिना । देव ! ज्ञातो मयाप्येष राजा योऽभाणि सूरिभिः ॥ ७१४ ॥ देवाय कथयिष्यामि रूपमस्य परिस्फुटम् । अहमेव मदन्तेस्तु सर्वमत्र निवेदितम् ॥ ७१५ ॥ इत्थमावसरं ज्ञात्वा पूर्वं संज्ञावबुद्धिना । तेनानतशिरस्केन प्रोक्तं मध्यमबुद्धिना ॥ ७१६ ॥ योऽयं भगवतादिष्टो भवतानवकारणम् । गृहिधर्म्मः स मे नाथ ! दीयतामुचितो यदि ॥ ७१७ ॥ सर्वसंयमदीक्षां नादातुं शक्नुवन्ति ये । तेषां गृहस्थधर्म्मोऽसौ युक्त एव भवादृशाम् ॥ ७१८ ॥ प्रभो ! गृहस्थधर्म्मोऽसौ किंरूप इति भूभुजा । पृष्टः सम्यक्त्वमूलानि व्रतानीत्यवदद् गुरुः ॥७१९॥ ततस्तं धर्म्ममादित्सुर्गुरुं राजा व्यजिज्ञपत् । दीयतां भगवन्नेष गृहिधर्म्मो ममापि हि ॥७२०॥ योग्ययोरथ भूनाथमध्ययोः प्रददौ तयोः । कर्म्मजाड्यच्छिदाधर्म्मं गृहिधर्म्मं मुनीश्वरः ॥ ७२१ ॥ मनीषिदीक्षादानार्थमुद्यतेऽथ मुनीश्वरे । तमभाषत भूभर्ता भक्तिनिर्भरया गिरा ॥ ७२२ ॥ स्वामिन् ! मनीषिणानेन प्रव्रज्याऽद्यैव मार्गितः । किन्तु स्वतोषसत्कं चिकीर्षेऽस्य त्वदाज्ञया ॥ ७२३ ॥ तूष्णीकेऽथ स्थिते सूरौ भूपतिं सचिवोऽभ्यधात् । प्रभ्यस्तुतिविधौ देव ! प्रभवन्ते नैव साधवः ॥ ७२४ ॥ यद्यप्येते तद्विषयोपदेशं ददतेऽन्यदा । प्रस्तावसमये लोकानादिशन्ति तथापि न ॥ ७२५ ॥ किन्त्वेतां विदितामेते प्रशंसन्त्येव ते नृपम् । अस्मिन्नर्थे मनीष्येव स्वयमेवोद्यते ततः ॥७२६॥ मनीषी राजमन्त्रिभ्यामर्थेऽस्मिन्नर्पितस्ततः । तद्वचस्तेन मेने च प्रार्थना

मङ्गभीरुणा ॥ ७२७ ॥ अथ भूभर्तुरादेशान्नियोगिपुरुषाः क्षणात् । पुरं देवगृहं तच्च चक्रिरे विततोत्सवम् ॥७२८॥
मनीषिमध्यमामात्यप्रमुखैः परिवारितः । उत्तस्थौ नरनाथोऽपि स्नात्रं कर्त्तुं जगत्पतेः ॥ ७२९ ॥ महताथ
विमर्द्देन विदधे वसुधाधवः । स्नात्रं युगादिदेवस्य पुरस्कृत्य मनीषिणम् ॥ ७३० ॥ मनीषिसत्त्वसंतुष्टास्तदा तत्र
सुरा अपि । समागत्य जिनेन्द्रस्य पूजां पुष्पोच्चयैर्व्यधुः ॥ ७३१ ॥ विलिप्य पूजयित्वा च कृत्वा चारात्रिकं प्रभोः ।
मनीषिनृपमुख्यास्ते भक्त्या साधून् ववन्दिरे ॥ ७३२ ॥ स्वगेहनयनायाथ समारोप्य जयद्विपे । मनीषिणं नृपो
जज्ञे छत्रभृद् श्रद्धया स्वयम् ॥ ७३३ ॥ जनन्या शुभसुन्दर्योल्लासवत्याथ संश्रितः । करेणुकाधिरूढेन युतो
मध्यमबुद्धिना ॥७३४॥ सुबुद्धिप्रमुखै राजलोकैः पौरैश्च नन्दितः । प्रापदापणमार्ग्गेण मनीषी नृपमन्दिरम् ॥७३५॥
युग्मम् ॥ तत्र स क्षणमाऽऽस्थानं दत्त्वा लोकान् विसृज्य च । जगाम मज्जनस्थानं भूपतेस्तोषवृद्धये ॥ ७३६ ॥
भ्रातुः सूनुमिवैतं च देवी मदनकन्दली । सर्वशुद्धान्तसंयुक्ता स्नपयामास गौरवात् ॥ ७३७ ॥ वाससी सूक्ष्म-
शुक्ले च परिधाय विधाय च । जिनार्चां भोजनस्थानं जगाम स गतस्मयः ॥७३८॥ तत्रानेकविधाहारं रसनाविहि-
तोत्सवम् । बुभुजे भूभुजा साकं निरभिष्वङ्गमानसः ॥ ७३९ ॥ ततस्ताम्बूलमादाय विश्रम्य शयने क्षणम् । राजा-
मात्यादियुक्तोऽसौ दत्त्वाऽऽस्थानीमुपाविशत् ॥ ७४० ॥ राजा सुबुद्धिमूचेऽथ सखे ! त्वदनुभावजा । सिद्धिसौ-
धैकनिःश्रेणिः श्रेयःश्रेणिरसौ मम ॥ ७४१ ॥ यतो देवं गुरुं धर्म्मं प्राप्यं प्रोत्साहितस्त्वया । बभूव चेदृशा सार्द्धं

१ ०संस्थानं क० ख० ग० घ० । २ सभाम् ।

नररत्नेन मीलकः ॥ ७४२ ॥ त्वमेवंविधकस्याऽहेतुरस्य मेऽभवः सखे !। त्वमेव हितकारी तवभार्या ते सुबु-
द्धिवा ॥ ७४३ ॥ प्रस्तुताय महामात्यः पविलेखस्य मे प्रभो !। परभाग नहीत्वमारोपयितुमर्हसि ॥ ७४४ ॥
भाग्यसंपत् तवैवासौ सर्वकल्याणकारिणी। पुंसां परोपरोधेन न स्युः श्रेयांसि जातुचित् ॥ ७४५ ॥ मनीष्युवाच हे
राजन् ! हर्षो दर्शनजो यसौ । प्रभामासनिभो भाविकैवल्यानन्दभास्वतः ॥७४६॥ आमेत्युदित्वा भूपालः सचिवं
पुनरभ्यधात् । अभ्यर्थनिगुरूणां विवेच्ये वीक्ष्यतां सखे ! ॥ ७४७ ॥ मन्त्र्युवाचात्र किं चित्रं ? यथार्थो हि मनी
षिणः । प्रयुक्ता एव जायन्ते हेतुमात्रं गुरुः पुनः ॥ ७४८ ॥ इतश्च नृपमापृच्छ्य पूर्वमेव निजे गृहे । मध्यः साध
र्म्मिकस्नेहाभीत आसीत्सुबुद्धिना ॥७४९॥ तदा सोऽभ्याययौ तत्र विहितस्नानभोजनः । मनीषिणा दापिते चोप
विष्टो गुरुविष्टरे ॥ ७५० ॥ राजाथ मध्यमुद्दिश्य समभाषत मन्त्रिणम् । महोपकर्त्ता सत्त्वेष महाभागः सखे !
मम ॥ ७५१ ॥ यतोऽप्रमादात्कपन्त्र दुष्करं गुरुणा यदा । प्रोषेऽभूदाकृत्त्वं मे भीरोरिव तदाहवे ॥ ७५२ ॥
ततोऽनेन यदा धर्मो यथास्ते गृहमेधिनाम् । स निवृत्तोर्ममाप्युत्वेधिवस्मास्म्यमभूत् तदा ॥ ७५३ ॥ तदिस्थ स्वा-
स्थ्यदानेन ममायमुपकारकः । अमात्यः प्राह देवेन साध्वेवदवधारितम् ॥ ७५४ ॥ यतः स्याद् धर्म्मसंप्राप्तौ
हेतुमात्रमपीह यः । संसारे नापरस्तस्माज्जन्तोरस्त्युपकारकः ॥७५५॥ किञ्च सान्त्वनाभार्यं तवस्तुल्यस्वभावतः ।
मध्यमाभासनं नून मध्यमस्यास्य युज्यते ॥ ७५६ ॥ राजा वध्याधिपस्थलं भिक्ष्यामानो यसौ मम । बभूव

१ मेऽभवः क० स० ग० । २ नविनीरयम् । ३ ०ति क० स० प० ।

किल भूपत्वाद् यदहं पुरुषोत्तमः ॥ ७५७ ॥ अर्थापत्त्या त्वमात्येन साम्प्रतं गणितः पुनः । मध्यमजनलेख्येऽहं धिग् मां मिथ्याभिमानिनम् ॥ ७५८ ॥ मनीषिणमपेक्ष्यैनं त्यजद्भिर्बालचेष्टितम् । यद्वा मध्यमरेखापि मादृशां रतिदुर्लभा ॥ ७५९ ॥ ध्यात्वेति मन्त्रिणं राजाऽवादीदार्य ! कुतो मम । तत्र चैत्ये गतस्याभूदानन्दो वचनातिगः ॥ ७६० ॥ कथं च तस्य बालस्याध्यवसायस्तथाविधः । संपन्नः साधुलोकेऽपि तादृशे निकटस्थिते ॥७६१॥ अमात्योऽभिदधे देव ! तच्चैत्यं सान्वयाभिधम् । प्रमोदशेखरं येन प्रमोदस्तेन तेऽभवत् ॥७६२। बालदुष्टाभिसन्धेस्तु सूरिरेवाह कारणम् । किञ्च बालस्य नामैव हन्त्यमुं संशयं स्वयम् ॥७६३॥ किञ्च द्रव्यक्षेत्रकालभवभावाद्यपेक्षया । शुभाशुभपरिणामाः सत्त्वानां स्युरनेकधा ॥७६४॥ ततो बालस्य दोषोऽयमुद्यानक्षेत्रतोऽप्यभूत् । नृपोऽवोचत्कथं तर्हि तद्दोषायाभवन्न नः ॥७६५॥ सुबुद्धिः प्राह संप्राप्य सामग्रीं पुरुषादिकाम् । निजविलसिताख्यं तत् चित्रकार्यकरं वनम् ॥ ७६६ ॥ अत एव प्रभो ! तां तां सामग्रीं प्राप्य तद्वनम् । चक्रे बालास्मदादीनां स्वं स्वं भावं पृथक् पृथक् ॥७६७॥ नृपोऽवोचत् त्वयायं मेऽपनीतः संशयः सखे ! । पूर्वोद्दिष्टं कर्म्मविलासरूपं कथयाधुना ॥७६८॥ मन्त्र्यूचे देव ! यद्येवमेकान्ते स्थीयतां ततः । ततो मनीष्यनुज्ञातो तौ कक्षान्तरमीयतुः ॥७६९॥ जगाद मन्त्री ये देव ! सूरिणा वर्णिता नराः । उत्कृष्टतमा उत्कृष्टा मध्यमाश्च जघन्यकाः ॥७७०॥ तन्मध्ये प्रथमे ज्ञेयाः सिद्धाः कर्म्ममलोज्झिताः । मनीषिमध्यबालाख्याः शेषास्त्वेते यथाक्रमम् ॥ ७७१ ॥ उक्तः कर्म्मविलासो

१ यद्यहं क० ग० । २ मध्यमजनताऽपि । ३ नृपोऽवोचे त्वया क० ख० ग० घ० ।

यः स एषामेव तु प्रमो ।। ईदृक्स्वरूपजनकः स्वस्वकर्मोदयो मतः ॥ ७७२ ॥ शुभसुन्दरीसामान्यरूपाऽकुशलमा
लिका । अमीषां मावरो देव ! याः सूरिभिरुदाहृताः ॥७७३॥ सिसोऽस्य परिणतयः स्वस्वकर्मोदयस्य ताः । शुभ
मिभाशुभरूपाः पविज्ञेया यथाक्रमम् ॥ ७७४ ॥ प्रभूतमत्यस्ता एवैतानेकविधरूपिणः । आख्याताः स्पर्शनो यस्तु
तत् दुष्टं स्पर्शनेन्द्रियम् ॥७७५॥ तच्छ्रुत्वा भूपतिर्दध्यावन्यव्याजेन सूरिभिः । सान्वयाद्वैरिदं सर्वं प्रोक्तमासीत्पुरो
मम ॥ ७७६ ॥ केवलं न मया सम्यक् परिज्ञातं तदा हृदि । सुबुद्धिर्ज्ञातवान् यत्नु साधुसङ्गोऽत्र कारणम् ॥७७७॥
व्याख्येस्यभिदधे राजास्माभिः संप्रत्यय सखे ! । वृत्तान्तो विदितः सम्यक् किन्त्वेतदधुनोच्यते ॥ ७७८ ॥ कालं
कियन्तमप्येष मनीषी चेत् प्रतीक्षते । वयमप्यमुना सार्धमेषाऽध्वस्तदा मतम् ॥ ७७९ ॥ क्षणमप्यासितु शक्ता
यथास्य विरहे वयम् । तादृग् नाद्यापि चारित्रवासना जायते च नः ॥ ७८० ॥ तत्तया कथमप्यार्य ! प्रलोभय
मनीषिणम् । यथा विषयभागेषु कि(क०)ञ्चित्कालं विलम्ब्यते ॥७८१॥ मन्मुखाच्च प्रमोराज्ञा प्रमाण सर्वथा मम ।
तथापि किञ्चित्स्वार्थे देव विज्ञापयाम्यहम् ॥ ७८२ ॥ देवेनोक्तं यच सोढुं यथास्य विरहं क्षमाः । तद्युक्तं पक्षपातो
हि गुणे(०णि)षु सुकृतात्मनः ॥ ७८३ ॥ यत्पुनर्लोभयित्वैनं कश्चित् कालं प्रतीक्षय । इत्यादिष्टं न तद्देव ! युक्तं मे
प्रतिभासते ॥ ७८४ ॥ यतः स्नेहो भवत्येवं प्रमन्यारम्भकर्षणात् । अस्मिन् प्रस्तुत वैरिस्व निर्विपासो मयाघ्रात्
॥ ७८५ ॥ न चैष विपर्ययैर्देव ! देविकैरपि लोभ्यते । हित्वा मोहं ततः कार्यः कार्येऽस्य प्रगुणादरः ॥ ७८६ ॥

---

१ यस्तु सा० क० ख० ग० घ० । २ किञ्चित् ग० ।

आमेत्युक्त्वाथ पप्रच्छ सत्वर व्रतवासरम् । सांवत्सरं समाहूय सिद्धार्थं नाम पार्थिवः ॥ ७८७ ॥ दिनादस्माद्दिनं
साधु नवमं देव ! विद्यते । इत्युक्तवन्तं भूपालस्तं सत्कृत्य विसृष्टवान् ॥७८८॥ गते तत्र दिने राजाऽकारयद्दिवसा-
ष्टकम् । पूजां समस्तचैत्येषु महोत्सवपुरःसरम् ॥ ७८९ ॥ तेषु च द्विरदारूढो मनीषी जिनवन्दनाम् । समेतः
क्षितिशक्रेण चक्रे शक्र इवान्वहम् ॥ ७९० ॥ अष्टमे च दिने प्राप्ते कृतसर्वोचितक्रियः । विहितोदारनेपथ्यः प्रधानं
रथमास्थितः ॥ ७९१ ॥ सारथीभूतभूपालो वारस्त्रीधृतचामरः । धृतश्वेतमहाच्छत्रो वन्दिवृन्दकृतस्तुतिः ॥७९२॥
रथारूढैर्मध्यबुद्धिसुबुद्ध्यादिभिरावृतः । कुर्वन् पौरदृगानन्दमर्थिसार्थं कृतार्थयन् ॥ ७९३ ॥ चतुरङ्गचमूपेतः प्रेक्ष्य-
माणः सुरैरपि । मनीषी व्रतमादातुं तदुद्यानमथागमत् ॥ ७९४ ॥ कलापकम् ॥ इतश्च स्यन्दनारोहादार-
भ्यालोकयन्नृपः । रूपं मनीषिणः सत्त्वपरीक्षार्थं विशेषतः ॥ ७९५ ॥ परं न लक्षितः कोऽपि तस्य निर्मल-
चेतसः । विकारस्तादृशे हर्षहेतौ सत्यपि भूभुजा ॥ ७९६ ॥ गुणिरागादथ क्षीणतद्विबन्धककर्म्मणः । आविर्बभूव
चारित्रपरिणामो महीपतेः ॥ ७९७ ॥ देव्या मदनकन्दल्याः सामन्तानां च भूपतिः । सुबुद्धेर्मध्यबुद्धेश्च तं भावं
निजमाख्यत ॥ ७९८ ॥ तैरप्युद्भूतचारित्रपरिणामैरथोदितम् । चारु चारूदितं देव ! युक्तमेतद्भवादृशाम्
॥ ७९९ ॥ सत्त्वं विलोक्य देवस्य तथैतस्य मनीषिणः । अस्माकमपि नो चित्तं संसारे रमतेऽधुना ॥ ८०० ॥
साधु साध्विति भूपालः प्रत्येकमुपवर्ण्य तान् । तदैव स्थापयामास राज्ये सूनुं सुलोचनम् ॥ ८०१ ॥ जिनवेश्म

१ ज्योतिषिनम् । २ ०वक्षी० ग० ।

प्रणिपत्याथ पूजयित्वा जगद्गुरुम् । गुरुभ्यो नियमाकृत ते सर्वेऽप्याचचक्षिरे ॥ ८०२ ॥ सर्वसन्तापहारिण्या धरिस्तानथ दीक्षया । मन्यप्रदीपचन्द्रिकया चकोरानिव चन्द्रमाः ॥ ८०३ ॥ तेषां संवेगपुष्कलं कल्योऽयमिति च क्षणम् । विदित्वा जनतामध्ये सूरिभिर्धर्मदेशना ॥ ८०४ ॥ अथ पप्रच्छ राजर्षिः सुत्र पारगमनीषिणः । चित्रं वाक्यमन्यस्य कस्याप्यस्ति कश्चित्प्रभो ! ॥ ८०५ ॥ सूरिरूचे त्वया यास्य ज्ञाताम्बा शुभसुन्दरी । यावन्त स्वसुतास्तेषां सर्वेषामीदृश मनः ॥ ८०६ ॥ राजर्षिर्भनबोधाय पुनः प्रोचे विदन्नपि । भगवन् ! शुभसुन्दर्याः किं सन्ति बहवः सुताः ? ॥८०७॥ जगाद गुरुरायुष्मन् ! ये केचन जगत्त्रये । मनीषिसदृशाः सत्वास्ते सर्वेऽस्या ध्रुवं सुताः ॥ ८०८॥ किञ्च मिथ्यात्रयेऽप्यत्र जना ये मध्यमोपमाः । ते सर्वे खलु सामान्यरूपायास्तनयाः स्मृताः ॥ ८०९ ॥ ये पुनर्बालकल्पनिभा भविनो भुवनत्रये । सर्वेऽकुशलमालाया विज्ञेयास्ते तनूरुहाः ॥८१०॥ राजर्षिरूचे यदेवमेवं तर्हि व्यवस्थिते । त्वयिते ममकमेतदधुना निश्चितं मया ॥ ८११ ॥ मातृत्रयेण चास्य जघन्योत्तम मध्यमम् । सर्वं कर्मविलासस्य जगदेतत्कुटुम्बकम् ॥ ८१२ ॥ सूरिरूचे न संदेहः सम्यगार्येण लक्षितम् । मार्गानुसारिणी बुद्धिर्भवत्येव भवादृशाम् ॥ ८१३ ॥ तदेव च स्थितेऽप्यस्य त्यक्त्वा बालचेष्टितम् । मनीषिचरिते यत्नः कर्तव्यो मध्यबुद्धिभिः ॥ ८१४ ॥ कुसंसर्गाच्च बालस्य बभूवुः क्लेशराशयः । तस्मात् स एव यत्नेन हातव्यः सुखकाङ्क्षिभिः ॥ ८१५ ॥ कुसंसर्गपरित्यागाद्विहापि सुखभाजनम् । मनीषी समभूदेव परत्र च शिवगामी ॥८१६॥

१ सुताः ।

इत्युक्तवन्त त सूरिं नत्वा मुदितमानसाः । कुमा[illegible]ः सर्वे स्थानं निजनिजं ययुः ॥ ८१७ ॥ विजहारान्यतः सूरिर्मनीष्यथ शिवं क्रमात् । प्रययौ देवलोकं तु मध्यबुद्ध्यादिसाधवः ॥ ८१८ ॥ बालस्य तु यदादिष्टं सूरिभिः शाविचेष्टितम् । तत्तथैवाखिलं जातं नान्यथा ज्ञानिनां वचः ॥ ८१९ ॥ [ इति ] स्पर्शनकथानकम् ॥ कथानकमिदं तन्मे शृण्वतो लङ्घितं दिनम् । तेनाऽऽगममहं न ह्यः कुमार ! भवदन्तिके ॥ ८२० ॥ अथावोचं महं भद्र ! सुन्दरं विदधे त्वया । श्रोतुं युज्यत एवासौ कथाद्भुतरसप्रपा ॥ ८२१ ॥ अहो ! अतिदुरन्तेयं पापमित्रस्य संगतिः । यतोऽजायन्त बालस्य केवलं क्लेशराशयः ॥ ८२२ ॥ विदुरोऽचिन्तयत्तावत् कथार्थो विदितोऽमुना । ततो वचोऽवकाशो मे भविता संप्रति ध्रुवम् ॥ ८२३ ॥ इतश्चादूरदेशस्थः श्रुत्वा तद्वचनं मम । वैश्वानरः स साशङ्कश्चिन्तयामासिवानिदम् ॥ ८२४ ॥ कुमारस्यायमुल्लापः सुन्दरो मे न भासते । दुष्टोऽयं विदुरो ह्यस्य मद्रूपं ज्ञापयिष्यति ॥ ८२५ ॥ विदुरोऽथावदच्चारु कुमारेणावधारितम् । किञ्चाख्यानमिदं श्रुत्वा मयापीदं विचिन्तितम् ॥ ८२६ ॥ कदाचिदपि नो पापमित्रसङ्गः प्रजायते । चेन्नन्दिवर्द्धनस्यापि ततो भवति सुन्दरम् ॥ ८२७ ॥ नैष मे भविता भद्र ! कदापीति मयोदिते । विदुरोऽथ मम स्थित्वा कर्णाभ्यर्णेऽभ्यधात् पुनः ॥ ८२८ ॥ दुष्टो वैश्वानरोऽप्येष श्रूयते लोकवार्त्तया । सम्यक् परीक्ष्य एवायं कुमार ! भवता ततः ॥ ८२९ ॥ स्पर्शनो बालकस्येव माभूदेष तवापि हि । पापमित्रतयानर्थसन्ततेः कारणं परम् ॥ ८३० ॥ अत्रान्तरे कुरङ्गाक्षि ! वैश्वानरनिदेशतः । क्रूरचित्ताभिधानं तद् वटकं भक्षितं मया ॥ ८३१ ॥ ध्मातताम्रोपमं वक्त्रं

विभ्रमवज्नुभावतः। विदुरं निष्ठुरैर्वाक्यैरवादिपमिदं ततः ॥८३२॥ पाप ! निस्त्रप ! मां बालकस्य त्वं कल्पपस्परे ! । अमेयमहिमानं च मन्मिश्रं स्पर्धनोपमम् ॥ ८३३ ॥ मयैवं विक्षुब्धेन विदुरस्य दुरात्मना । दत्ता चपेटा चार्वङ्गि ! कपोलप्रविदारिणी ॥ ८३४ ॥ मद्वचा फूत्कृतेनाथ प्रहर्तुं धाविते मयि । विदुरः स पलायिष्ट 'वेपमानश्च दुर्भयात् ॥ ८३५ ॥ श्रुत्वा मदीयवृत्तान्तं च सर्वमथ तन्मुखात् । तातोऽस्माद्‌ यन्नविष्यथामालम्ब्योपाय वर्जितः ॥८३६॥ मयीताक्षेपविषयस्य प्राप्तस्य नवयौवनम् । तातोऽप्य पृथगावासं परिवारं च मे ददौ ॥ ८३७ ॥ सांसारिकसुखैस्तैस्तैर्वर्तमानस्य मे ततः । कियन्त्यप्यमरस्येव दिनानि व्यतिचक्रमुः ॥ ८३८ ॥ अथान्येद्युरहं यावत् तातं नत्वा निर्गतोऽस्मि । आगां तावदमुत्राभवद्धे कलकलो महान् ॥ ८३९ ॥ प्रस्थितोऽहं ततो यावत्तं प्रान्तस्थं प्रति द्रुतम् । सेनानीर्धवलस्तावदभ्यागच्छन्मयेक्षितः ॥ ८४० ॥ मामेत्य नत्वा स प्राह देवस्त्वामादिशत्यदः । यदितस्त्वमपि निर्याते द्रुतोऽम्बेस्यैवमाख्यत ॥ ८४१ ॥ राज्ञः कनकचूडस्य सूनुः कनकशेखरः । कुशावर्तपुरात्तातापमानेन समागतः ॥ ८४२ ॥ युष्मत्समीपमधुना वने मलयनन्दने । वहिरस्त्येतदाकर्ण्य प्रमाणं देव एव हि ॥ ८४३ ॥ युग्मम् ॥ तन्मुख्याः सबन्धुं तं प्रत्युद्गन्तु मम स्वयम् । चलिताः समस्तमप्येतीत्याख्यातु प्रहितोऽस्म्यहम् ॥ ८४४ ॥ गत्वाहमथ तातस्य मिलितः सपदि वने । अप्राक्ष धवलं वपुः कुप ! कनकशेखरः ॥ ८४५ ॥ धवलः प्राह कनकचूडस्तन्मातृसोदरः । अतो

१ कम्पमान॰ मु० । २ सर्वमप्यथ मु० ।

मातुलजोऽयं ते भ्राता कनकशेखरः ॥ ८४६ ॥ अथान्तिकगतस्तातः कृतपादनमस्कृतिम् । समालिलिङ्ग तं गाढं प्रेम्णा कनकशेखरम् ॥ ८४७ ॥ कृतायामस्य योग्यायां प्रतिपत्तौ मयापि च । महता तं विमर्देन निजावासेऽनयन्नृपः ॥ ८४८ ॥ ताताम्बाभ्यां च स प्रोचे चारु! चारु! त्वया कृतम् । स्वाननेन्दुं दर्शयित्वास्माकं यत्त्वमदा मुदम् ॥ ८४९ ॥ कुमारैतदपि प्राज्यं राज्यं पैतृकमेव ते । निर्विकल्पमनास्तिष्ठ तस्मादत्र यथासुखम् ॥ ८५० ॥ उक्त्वेत्यस्यार्पयत्तातो वेश्म मद्वेश्मसन्निधौ । स्थितस्यात्र च कालेन स्नेहः सह मयाऽभवत् ॥ ८५१ ॥ अन्यदा विजने पृष्टो मया कनकशेखरः । जनकस्यापमानेन भवानत्रागतः किल ॥ ८५२ ॥ जनकेन ततः कीदृगपमान. कृतस्तव । इत्यहं श्रोतुमिच्छामि ततः सोऽप्येवमाख्यत ॥ ८५३ ॥ तातेन चूतमञ्जर्या जनन्यात्यन्तलालितः । कुशावर्त्तपुरे तावदहमासं कुमारकः ॥ ८५४ ॥ अन्यदा मित्रवृन्देन कलितः केलिलालसः । गतः शमावहं नाम काननं नन्दनोपमम् ॥ ८५५ ॥ मूर्त्तिमानिव सद्धर्म्मस्तत्राशोकतरोस्तले । ध्यानस्थितो मयाऽदर्शि दत्तनामा मुनीश्वरः ॥ ८५६ ॥ नत्वोपविष्टस्तं हृष्टः समित्रोऽहं तदग्रतः । ध्यानं सोऽप्युपसंहृत्य ददावस्माकमाशिषम् ॥ ८५७ ॥ अथ पृष्टो मया धर्म्मं श्रद्धया श्रमणाग्रणीः । श्रमणश्राद्धभेदेन स द्विधा तमचीकथत् ॥ ८५८ ॥ गृहिधर्म्मं गृहीत्वाहं स्वगृहे मुदितस्ततः । सवयस्यः समायातो मुनिरप्यन्यतो गतः ॥ ८५९ ॥ अन्यान्यश्रावकैः सार्द्धं विदधानस्य संगतिम् । दृढा पाषाणरेखेव ममाभूद्धर्म्मवासना

---

१ समा० क० ख० ग० घ० । २ साकं वि० क० ख० ग० घ० ।

॥ ८६० ॥ सोऽन्येद्युः पुनरायातो गत्वोद्याने मुनिर्मया । नत्वाऽपृच्छि भवन्तोऽर्हं किं सारमथ सोऽवदत् ॥ ८६१ ॥
अहिंसाध्यानयोगश्च रागादीनां विनिग्रहः । साधर्म्मिकानुरागश्च सारमेतज्जिनागमे ॥ ८६२ ॥ मयाथ चिन्तितं
तावदहिंसादित्रयं मया । कर्तुं न शक्यमारम्भविषयादिनिषेविणा ॥ ८६३ ॥ साधर्मिकानुरागे तु प्रयतिष्ये
स्वशक्तितः । निश्चित्येति यतिं नत्वाऽऽवगामाहं स्वमाश्रयम् ॥ ८६४ ॥ तावानुग्राममथ प्राप्य ततः प्रभृति
सर्वतः । साधर्मिकाणां वात्सल्यं मया कर्तुं प्रचक्रमे ॥ ८६५ ॥ भोजनाच्छादनद्रव्यालङ्कारार्थैरतोषयम् ।
साधर्मिकान् यथाकामं च भूनिव निशानहम् ॥ ८६६ ॥ परमेष्ठिनमस्कारमपि पठेच यो जनः । स देशे योदया
पूर्वं विशिष्टोऽकरदो मया ॥ ८६७ ॥ रथयात्राजिनस्नात्राष्टाह्निकादिमहोत्सवैः । एकच्छत्रमभूद्राज्यं तदार्हद्धर्म्म
भूपतेः ॥८६८॥ तां तादृशीमथालोक्य जिनधर्म्मप्रभावनाम् । मिथ्यादृग् दुर्मुखो नाम मन्त्री प्रद्वेषमाप्तवान् ॥८६९॥
दोषपाशेमहाम्भोधिः स दुरात्माहितः किल । रहसि स्थितमन्येद्युस्तातमेवं व्यजिज्ञपत् ॥ ८७० ॥ देवाय
नीतिमुल्लङ्घ्य धर्म्मव्याजेन विप्लुतः । यः प्रारम्भि कुमारेण सुन्दरो मे न भाति सः ॥ ८७१ ॥ न लुम्पन्ति हि
मर्यादां करदम्भरमिया जनाः । ये मुक्ता मुक्तकाचाराः कमनर्थं न कुर्वते ? ॥८७२॥ अकार्येऽत्र प्रवृत्तेषु तेषु स्वच्छन्द
चारिषु । कस्यात्र यूयं राजानः किं वा राज्यं विनाज्ञया ॥ ८७३ ॥ तदिदं यत् कुमारेण देव । प्रारम्भ्यलौकिकम् ।
राजनीतेः समुत्तीर्य कुरुसते तत्र सुन्दरम् ॥ ८७४ ॥ तातः प्राहार्य । यद्येवं स्वयमबोध्यता त्वया । कुमारो न यय

१ सद्धर्मजिनशासने ।

तस्य संमुखं भाषितुं क्षमाः ॥ ८७५ ॥ तातादेशमवाप्यैवमथागत्य स दुर्मुखः । सप्रपञ्चं तथैवोचे ममापि पुरतः
शठः ॥ ८७६ ॥ अपि प्रादुर्भवत्कोपविह्वलीभूतचेतसा । न्यगद्यत मया सोऽथ विधायाकारसंवरम् ॥ ८७७ ॥
आर्य ! युक्तमिदं वक्तुं तदा मां प्रति यद्यहम् । पारदारिकचौरादिदुष्टानां विदधेऽर्चनम् ॥ ८७८ ॥ ये तु
स्वगुणमाहात्म्याद् देवानामपि पूजिताः । पूजायां महतां तेषां कोऽस्माकं धर्म्मविप्लवः ? ॥८७९॥ एते च करद-
ण्डाभ्यां मुक्ता अपि महाशयाः । नानीतिं कुर्वते क्वापि सदाचारपथाध्वगाः ॥ ८८० ॥ तथा नाथो जगन्नाथो
येषामेतेषु किङ्करः । यः स्याद्राजा स एवात्र राजा शेषास्तु किङ्कराः ॥ ८८१ ॥ एवं चाचरता ब्रूहि ? राजनी-
तेर्विलङ्घनम् । किं मया विदधे ? येन भवानेवं प्रजल्पति ॥ ८८२ ॥ अलीकं धर्म्मवात्सल्यं मदीयं वदता पुनः ।
परिस्फुटीकृतं नूनं दुर्मुखत्वं त्वयात्मनः ॥८८३॥ अथ विज्ञाय मे भावं स दध्याविति दुर्मुखः । निबिडा तावदेतस्य
वासना जिनशासने ॥८८४॥ तथापि हि मयात्रार्थे परिपृष्टोऽस्ति भूपतिः । स्वयमेव ततोऽवश्यं विधास्ये स्वसमी-
हितम् ॥८८५॥ सान्त्वयाम्यधुना त्वेनमिति ध्यात्वाऽवदत्स माम् । भवच्चित्तपरीक्षार्थं कुमारैतन्मयोदितम् ॥८८६॥
नान्यथा तत् कुमारेण विचार्यं वचनं मम । इत्युक्त्वा निरगादेष दुर्मुखो मत्समीपतः ॥८८७॥ अथाहं चिन्तयामास
पापात्मैष ध्रुवं शठः । यदेवमभ्यधात् पूर्वमाकूतेन महीयसा ॥ ८८८ ॥ पश्चात् पुनर्झटित्येव चकाराकारसंवरम् ।
तन्न विज्ञायते हन्त किमसावाचरिष्यति ॥ ८८९ ॥ ध्यात्वेति तस्य वृत्तान्तं ज्ञातुं प्राहिणवं चरम् । चतुराख्यं
स चागत्य दिनैः कैश्चिन्ममाख्यत ॥ ८९० ॥ इतस्तावदहं गत्वा देवादेशेन दुर्मुखम् । विनयेन समाराध्य

॥ ८६० ॥ सोऽन्येद्युः पुनरायातो गत्वोद्याने मुनिर्मया । नत्वाऽप्रच्छि भवन्तोऽर्हे किं सारमथ सोऽवदत् ॥ ८६१ ॥ यर्हिंसाध्यानयोगश्च रागादीनां विनिग्रहः । साधर्म्मिकानुरागश्च सारमेतज्जिनागमे ॥ ८६२ ॥ मयाथ चिन्तितं तावदहिंसादित्रयं मया । कर्तुं न शक्यमारम्भविषयादिनिषेविणा ॥ ८६३ ॥ साधर्मिकानुरागे तु प्रयतिष्ये स्वशक्तितः । निश्चित्येति यतिं नत्वाऽऽग्रगामाहं स्वमाश्रयम् ॥ ८६४ ॥ ज्ञातानुग्रामश्च प्राप्य ततः प्रभृति सर्वतः । साधर्मिकाणां वात्सल्यं मया कर्तुं प्रचक्रमे ॥ ८६५ ॥ भोजनाच्छादनद्रव्यालङ्कारादैरतोपयम् । साधर्मिकान् यथाकाम च शृणिष निजाानहम् ॥ ८६६ ॥ परमेष्ठिनमस्कारमपि धत्ते च यो जनः । स देवो बोधया पूर्वे विहितोऽत्करवो मया ॥ ८६७ ॥ रथयात्राजिनस्नात्राष्टाहिकादिमहोत्सवैः । एकच्छत्रमभूद्राज्य यथार्हद्धर्म्मे भूपतेः ॥८६८॥ तां तादृशीमथालोक्य जिनधर्म्मप्रभावनाम् । मिथ्यादृग् दुर्मुखो नाम मन्त्री प्रद्वेषमादधौ ॥८६९॥ दोषपाथोमहाम्भोधिः स दुरास्माहितः किल । रहसि स्थितमन्येद्युस्तातमेष व्यजिज्ञपत् ॥ ८७० ॥ देवाप नीतिमुल्लङ्घ्य धर्म्मव्याजेन विप्लवः । यः प्रारम्भि कुमारेण सुन्दरो मे न भाति सः ॥ ८७१ ॥ न लुम्पन्ति हि मर्यादां कल्पान्तेऽपि यथा जनाः । ते मुक्ता मुक्ताकलापाराः कमनर्थं न कुर्वते ? ॥८७२॥ अकार्येऽत्र प्रवृत्तेषु तेषु स्वच्छन्द चारिषु । कस्यात्र नृप राजानः किं वा राज्य विनाशया ॥ ८७३ ॥ तदिदं यत् कुमारेण देव । प्रारब्धमलौकिकम् । राजनीतेः प्रभुत्वीर्ये युज्यते तन्न सुन्दरम् ॥ ८७४ ॥ तातः प्राहार्य ! यथेयं स्वयमेवोत्प्रेक्षितं त्वया । कुमारो न चयं

१ हस्तिनापुरे ।

तस्य संमुखं भाषितुं क्षमाः ॥ ८७५ ॥ तातादेशमवाप्यैवमथागत्य स दुर्मुखः । सप्रपञ्चं तथैवोचे ममापि पुरतः
शठः ॥ ८७६ ॥ अपि प्रादुर्भवत्कोपविह्वलीभूतचेतसा । न्यगद्यत मया सोऽथ विधायाकारसंवरम् ॥ ८७७ ॥
आर्य ! युक्तमिदं वक्तुं तदा मां प्रति यद्यहम् । पारदारिकचौरादिदुष्टानां विदधेऽर्चनम् ॥ ८७८ ॥ ये तु
स्वगुणमाहात्म्याद् देवानामपि पूजिताः । पूजायां महतां तेषां कोऽस्माकं धर्म्मविप्लवः ? ॥८७९॥ एते च करद-
ण्डाभ्यां मुक्ता अपि महाशयाः । नानीतिं कुर्वते क्वापि सदाचारपथाध्वगाः ॥ ८८० ॥ तथा नाथो जगन्नाथो
ऽेषामेतेषु किङ्करः । यः स्याद्राजा स एवात्र राजा शेषास्तु किङ्कराः ॥ ८८१ ॥ एवं चाचरता ब्रूहि ? राजनी-
तेर्विलङ्घनम् । किं मया विदधे ? येन भवानेवं प्रजल्पति ॥ ८८२ ॥ अलीकं धर्म्मवात्सल्यं मदीयं वदता पुनः ।
परिस्फुटीकृतं नूनं दुर्मुखत्वं त्वयात्मनः ॥८८३॥ अथ विज्ञाय मे भावं स दध्याविति दुर्मुखः । निबिडा तावदेतस्य
वासना जिनशासने ॥८८४॥ तथापि हि मयात्रार्थे परिपृष्टोऽस्ति भूपतिः । स्वयमेव ततोऽवश्यं विधास्ये स्वसमी-
हितम् ॥८८५॥ सान्त्वयाम्यधुना त्वेनमिति ध्यात्वाऽवदत्स माम् । भवच्चित्तपरीक्षार्थं कुमारैतन्मयोदितम् ॥८८६॥
नान्यथा तत् कुमारेण विचार्यं वचनं मम । इत्युक्त्वा निरगादेष दुर्मुखो मत्समीपतः ॥८८७॥ अथाहं चिन्तयामास
पापात्मैष ध्रुवं शठः । यदेवमभ्यधात् पूर्वमाकूतेन महीयसा ॥ ८८८ ॥ पश्चात् पुनर्झटित्येव चकाराकारसंवरम् ।
तन्न विज्ञायते हन्त किमसावाचरिष्यति ॥ ८८९ ॥ ध्यात्वेति तस्य वृत्तान्तं ज्ञातुं प्राहिणवं चरम् । चतुराख्यं
स चागत्य दिनैः कैश्चिन्ममाख्यत ॥ ८९० ॥ इतस्तावदहं गत्वा देवादेशेन दुर्मुखम् । विनयेन समाराध्य

जायस्तस्याग्ररक्षकः ॥ ८९१ ॥ स चान्यदा समाहूय श्रावकानभ्यधादिति । अरे ! कुमारो यद्धर्म्मग्राहितो यः प्रयच्छति ॥८९२॥ यच्च भूमीसुताऽऽमाभ्यः सम्भूतो भवतां करः । समर्प्पणीयं तत्सर्वमपि प्रच्छन्नमेव मे ॥८९३॥ कथितं च कुमारायैतद् चेत् तद्दो न जीवितम् । ऊरीकृत्य तदादेशं श्रावकास्ते ययुस्ततः ॥८९४॥ इतः च दुर्मुखा देव ज्ञात राज्ञा तथापि सा । केनापि हेतुना तस्यै कृत्वा गजनिमीलिकाम् ॥८९५॥ अथाभ्यापमहं तातामिप्रेत मकरोरिदम् । दुर्मुखः स्वधिया कुर्यात् यच्च चिन्त्यते ततः ॥ ८९६ ॥ तातेन तु सहास्माकं विग्रहो नैव युज्यते । पितरौ पुण्यदीक्षारौ यतो मम तोषितौ ॥ ८९७ ॥ आपीडामिमं प्रद्युम्नितानीं धक्ष्यते मया । अपक्रममभेषेतस्य स्मात्सांप्रतं मम ॥ ८९८ ॥ पर्यालोच्येत्यनाख्याय कस्याप्या[illegible]तः । अत्रागच्छमहं तातापमानस्ततसो मम ॥ ८९९ ॥ अथाभोचमहं साधु कुमार ! भवता कृतम् । इहायातोऽसि यत् त्यक्त्वा पराभवपदं पदम् ॥ ९०० ॥ स्वदेशमपि मुञ्चन्ति मानम्लानौ हि मानिनः । तमोहानौ व्रजत्येव द्वीपान्तरमहस्करः ॥ ९०१ ॥ एवं परस्परमीत्या तयोरास्ते व्यतीयुषि । दिवसोनौ भवावासे तातागमनमुपायकौ ॥ ९०२ ॥ तातान्तेऽय मता चार्यौ माघचापकरासनः । उत्थाय सदसो दृष्टा नेष्टः कनककेसरम् ॥ ९०३ ॥ कुतः समतिकेसरिराज्ञः ! इति वत्सता । ऊर्ध्वीभूयाथ सस्नेहं तेन ते परिरेभिरे ॥९०४॥ एते मदीयतातस्य माननीया महत्तमाः । इत्याथस्यौ मया पृष्टो दृष्टः कनककेसरः ॥ ९०५ ॥ सर्वेऽप्यथ समासीना विहितप्रतिपत्तयः । तातास्यैर्मे ततस्तातः प्रोचे

१ ०म्पर्य त० क० प० ।

कनकशेखरम् ॥ ९०६ ॥ कुमारामीभिराख्यातमिदं त्वत्तातमन्त्रिभिः । यतः प्रभृत्यनाख्याय कुमारो निर्ययौ
गृहात् ॥ ९०७ ॥ ततः प्रभृति मूर्च्छन्तौ विलपन्तौ च भूरिशः । प्रापतुर्न रतिं क्वापि दीनौ देवीनरेश्वरौ ॥९०८॥
युग्मम् ॥ तद्दुःखदुःखादाक्रन्दमुखे जाते जनेऽपि हि । संभूय बोधयामासुः सचिवास्तौ मृदूक्तिभिः ॥ ९०९ ॥
तथाप्यचेतयन्तौ तौ तत्प्राणत्यागभीरुकः । चतुरो ज्ञापयामास सहेतुं त्वदपक्रमम् ॥ ९१० ॥ कुमारो विद्यते
तावदिति तौ लब्धचेतनौ । जगाम क्व स इत्युक्तौ चतुरं तमपृच्छताम् ॥ ९११ ॥ ततः सोऽप्यब्रवीत् किञ्चि-
दाख्यातं मम तेन न । यानहेतुरपि मया चतुरत्वेन लक्षितः ॥ ९१२ ॥ किन्तु संभावयाम्येतद्गतो भावी जय-
स्थले । यतः पितृष्वसा नन्दा पद्मराजश्च वत्सलौ ॥ ९१३ ॥ साधु ज्ञातं त्वयेत्युक्त्वा चतुराय नृपो ददौ ।
तुष्टिदानं दुर्मुखं तु सदोषं निरवासयत् ॥ ९१४ ॥ भोजनं कार्यमावाभ्यां कुमारे खलु वीक्षिते । इति प्रतिज्ञां
चक्राते ततो देवीनरेश्वरौ ॥ ९१५ ॥ इतः कनकचूडं तं नृपं तत्रैव वासरे । वेत्रिणा सूचितोऽभ्येत्य दूतः
कोऽपि व्यजिज्ञपत् ॥ ९१६ ॥ अस्ति पूर्यां विशालायां नन्दनो नाम भूपतिः । तस्य प्रभावतीपद्मावत्यौ च
दयिते उभे ॥ ९१७ ॥ तयोर्यथाक्रमं पुत्र्यौ तत्राद्या विमलानना । परा रत्नवती नाम रतिप्रीती इवापरे
॥ ९१८ ॥ इतश्च कनकपुरे प्रभावत्याः सहोदरः । अस्ति प्रभाकरो राजा तत्पुत्रस्तु विभाकरः ॥ ९१९ ॥ तस्मै च
प्रददौ सत्यप्रतिज्ञा सा प्रभावती । निजां दुहितरं पूर्वप्रपन्नां विमलाननाम् ॥ ९२० ॥ सान्यदा गुणसंभारभावितं

१ इत्युक्त्वा च० ग० ।

ख्यातस्तस्याङ्गरक्षकः ॥ ८९१ ॥ स चान्यदा समाहूय भाषकानभ्यधादिति । अरे ! कुमारो यद्धर्म्मप्रतिष्ठो यः
प्रयच्छति ॥८९२॥ यच्च भूमीसुदाऽऽभाष्यः सम्भृतो भवता करः । समर्पणीय तत्सर्वमपि प्रच्छन्नमेव मे ॥८९३॥
कथितं च कुमारायैतच्चेत् तदो न जीवितम् । ऊरीकृत्य तदादेशं भाषकास्ते ययुस्ततः ॥८९४॥ इदं च दुर्मुखा
देव ज्ञातं राज्ञा तथापि सः । केनापि हेतुना तस्थौ कृत्वा गजनिमीलिकाम् ॥ ८९५ ॥ अथाभ्यायमहं तातामिप्रेत
मकरोदिदम् । दुर्मुखः स्वधिया कुर्याद् यद्यं क्षिप्यते ततः ॥ ८९६ ॥ तातेन तु सहास्माकं विग्रहो नैव युज्यते ।
पितरौ दुष्प्रतीकारौ यतो मम यतोदितौ ॥ ८९७ ॥ नापीदृशमिमं प्रभुमिदानीं क्षम्यते मया । अपक्रमणमेवैतस्त
स्माच्चरुत्तरं मम ॥ ८९८ ॥ पर्यालोच्येत्यनाख्याय कस्याप्यथ परिच्छदः । अत्रागच्छमहं तातापमानस्त्वसौ
मम ॥ ८९९ ॥ अथावोचमहं साधु कुमार ! भवता कृतम् । महापातोऽसि यत् त्यक्त्वा परामपदं पदम्
॥ ९०० ॥ स्वदेशमपि मुञ्चन्ति मानम्लानौ हि मानिनः । तेजोहानौ मयस्येव द्वीपान्तरमहस्करः ॥ ९०१ ॥
एवं परस्परप्रीत्या तदा रात्रे व्यतीयुषि । विश्रुतोर्नौ महावासे ताताह्वानमुपायतौ ॥ ९०२ ॥ तातान्तेऽथ गता
वावां यावत्तावदरालयः । उत्थाय सहसो दृष्टा नेमुः कनककेसरम् ॥ ९०३ ॥ कुतः सुमतिकेसरिराज्ञा ! इति
जल्पता । ऊर्ध्वीकृत्याथ सस्नेहं तेन ते परिरेभिरे ॥९०४॥ एते मदीयतातस्य माननीया महत्तमाः । इत्याचख्यौ
मया पृष्टो दृष्टः कनककेसरः ॥ ९०५ ॥ सर्वेऽप्यथ समासीना विहितप्रतिपत्तयः । तातास्म्यैर्मि ततस्तातः प्रोचे

१ ०व्यर्थं च० क० च० ।

कनकशेखरम् ॥ ९०६ ॥ कुमारामीभिराख्यातमिदं त्वत्तातमन्त्रिभिः । यतः प्रभृत्यनाख्याय कुमारो निर्ययौ
गृहात् ॥ ९०७ ॥ ततः प्रभृति मूर्च्छन्तौ विलपन्तौ च भूरिशः । प्रापतुर्न रतिं क्वापि दीनौ देवीनरेश्वरौ ॥९०८॥
युग्मम् ॥ तद्दुःखदुःखादाक्रन्दमुखे जाते जनेऽपि हि । संभूय बोधयामासुः सचिवास्तौ मृदूक्तिभिः ॥ ९०९ ॥
तथाप्यचेतयन्तौ तौ तत्प्राणत्यागभीरुकः । चतुरो ज्ञापयामास सहेतुं त्वदपक्रमम् ॥ ९१० ॥ कुमारो विद्यते
तावदिति तौ लब्धचेतनौ । जगाम क्व स इत्युक्तौ चतुरं तमपृच्छताम् ॥ ९११ ॥ ततः सोऽप्यब्रवीत् किञ्चि-
दाख्यातं मम तेन न । यानहेतुरपि मया चतुरत्वेन लक्षितः ॥ ९१२ ॥ किन्तु संभावयाम्येतद्गतो भावी जय-
स्थले । यतः पितृष्वसा नन्दा पद्मराजश्च वत्सलौ ॥ ९१३ ॥ साधु ज्ञातं त्वयेत्युक्त्वा[1] चतुराय नृपो ददौ ।
तुष्टिदानं दुर्मुखं तु सदोषं निरवासयत् ॥ ९१४ ॥ भोजनं कार्यमावाभ्यां कुमारे खलु वीक्षिते । इति प्रतिज्ञां
चक्राते ततो देवीनरेश्वरौ ॥ ९१५ ॥ इतः कनकचूडं तं नृपं तत्रैव वासरे । वेत्रिणा सूचितोऽभ्येत्य दूतः
कोऽपि व्यजिज्ञपत् ॥ ९१६ ॥ अस्ति पूर्यां विशालायां नन्दनो नाम भूपतिः । तस्य प्रभावतीपद्मावत्यौ च
दयिते उभे ॥ ९१७ ॥ तयोर्यथाक्रमं पुत्र्यौ तत्राद्या विमलानना । परा रत्नवती नाम रतिप्रीती इवापरे
॥ ९१८ ॥ इतश्च कनकपुरे प्रभावत्याः सहोदरः । अस्ति प्रभाकरो राजा तत्पुत्रस्तु विभाकरः ॥ ९१९ ॥ तस्मै च
प्रददौ सत्यप्रतिज्ञा सा प्रभावती । निजां दुहितरं पूर्वप्रपन्नां विमलाननाम् ॥ ९२० ॥ सान्यदा गुणसंभारभावितं

---

१ इत्युक्त्वा च० ग० ।

विमलानना । सुभाय मामथैः पठ्यमानं कनकशेखरम् ॥ ९२१ ॥ तत्र आतानुरागाय त्यक्तान्यसकलक्रिया ।
योगिनीव परारमान ध्यायन्त्यस्ति तैयैव सा ॥९२२॥ तस्यास्तारगतस्यानदर्शनात् सिलेऽप्यथ । विपीदति परीवारे
दृष्यो रत्नवती सुधीः ॥९२३॥ यतः प्रभृति सुभाय नाम कनकशेखरम् । ततः प्रभृत्यसौ मद्गे स्वान्तशून्या मम
स्वसा ॥९२४॥ सुग्धाया नूनमेतस्याश्चित्तचौरः स एव तत् । तातायाख्यामि तदिव त निगूढारयर्च यथा ॥ ९२५ ॥
विचिन्त्येति तयाख्याते नृपालोऽपि व्यचिन्तयत् । विमाकराय दत्तेय प्रमाणस्यास्ति यद्यपि ॥९२६॥ तथापि
नान्यथा संप्रत्येतस्या जीवितं भवेत् । तत् प्रेष्यतेऽसौ कनकशेखराय स्वयंवरा ॥ ९२७ ॥ कथञ्चित् बोधयिष्यामः
पश्चादपि विभाकरम् । ध्यात्वेति स तथाऽऽदर्शन् रत्नवत्येति भाषितः ॥९२८॥ ताताहमपि यास्यामि विमलाननया
सह । तस्या हि विरहे नाहं स्थातुं क्षणमपि क्षमा ॥९२९॥ किन्तु नाहं करिष्यामि पतिं कनकशेखरम् । यदङ्गनानां
तापस्य महतेरस्य कारणम् ॥९३०॥ लक्ष्मीष्टस्य मित्रस्य पत्न्या भाव्यं मया ततः । ममत्वेषमिति प्रोच्य तामपि
प्राहिणोन्नृपः ॥९३१॥ नन्दनोर्वीशनन्दिन्यौ ते च नित्यप्रयाणकैः । देवाथ गजिस्थानेऽत्र विधेये समागते ॥९३२॥
ताभ्यां च विज्ञपयितुं स्वरूपं प्रहितोऽस्म्यदः । देवपादान्तिके देव प्रमाणमधुना ततः ॥ ९३३ ॥ श्रुत्वा कनक
चूडस्तत् ततः कन्यकयोस्तयोः । आवासं दापयामास प्रसेनचलाधिपात् ॥ ९३४ ॥ तस्मात्सुमतिकेसरि

---

१ त्वमेव क० ग० च० । २ पुरी क० च०, पुरा ख० ग० । ३ नाम कम० ख०, मामा कम० क० च०, भाम्या कम० ग० । ४ ०मस्मयो ता० क० च० च० । ५ स०कन्यकयोस्तयो० ख० । ६ ०ईवो० ग० ।

वराङ्गानथ पार्थिवः । समाहूय समादिक्षद् विषादानन्दपूरितः ॥ ९३५ ॥ कन्याऽऽगतिः पश्यताहो ! हर्षकारणमप्यसौ । घृताहुतिनिभा भाति कुमारविरहानले ॥९३६॥ तद् यात यूयमस्त्येव कुमारो हि जयस्थले । कन्याऽऽगतिं ममावस्थां चाख्यातुं पद्मभूभुजे ॥९३७॥ एतद् द्वयमपि श्रुत्वा कुमारं स प्रहेष्यति । किञ्चानेन सहाऽऽनेयः कुमारो नन्दिवर्द्धनः ॥ ९३८ ॥ अयमेव यतो रत्नवत्याः समुचितो वरः । इत्युक्त्वा प्रेषितास्तेन वयमत्र समागताः ॥ ९३९ ॥ एतैस्तदिदमाख्यातमस्मभ्यं वत्स ! मन्त्रिभिः । एवं व्यवस्थितेऽस्माभिर्भवतोरिदमुच्यते ॥ ९४० ॥ कुरुतं माधुना कालविलम्बं लघु गच्छतम् । राज्ञः कनकचूडस्य चित्तानन्दकृते युवाम् ॥ ९४१ ॥ युवयोर्विरहोऽस्माभिः सोढुं यद्यपि नेश्यते[1] । कार्यगौरवमालोच्य तथापि प्रेषितौ युवाम् ॥ ९४२ ॥ अथ[2] तं पितुरादेशं प्रतीष्यावां ससंमदौ । प्रस्थितौ प्रवरामात्यचतुरङ्गबलान्वितौ ॥ ९४३ ॥ व्यक्ताव्यक्तौ च तौ वैश्वानरपुण्योदयौ मया । सार्द्धं प्रचेलतुर्मार्गो लङ्घितोऽथ कियानपि ॥ ९४४ ॥ इतश्च नरकद्वारभूतं दुष्टजनाश्रयः । जन्मभूरस्त्यनर्थानां रौद्रचित्ताभिधं पुरम् ॥९४५॥ तत्रानीतिपरः शिष्टविद्वेषी दुष्टसंग्रही । दुष्टाभिसन्धिनामास्ति राजा चरटसन्निभः ॥ ९४६ ॥ अनभिज्ञा परार्त्तीनामनुरक्ता निजे प्रिये । प्रियास्य निष्करुणताभिधाना पूतनाकृतिः ॥ ९४७ ॥ वृद्धिहेतुः पुरस्यास्य[3] वल्लभा तन्निवासिनाम् । तयोर्हिंसाभिधा चास्ति दुहितात्यन्तभीषणा ॥ ९४८ ॥ इतस्तामसचित्ताख्ये नगरेऽस्ति नरेश्वरः । सूनुर्द्वेषगजेन्द्राख्यो महामोहमहीपतेः ॥ ९४९ ॥ इतो वैश्वानरस्याम्बा

१ नेक्ष्यते क० ख० ग० घ० । २ अथ तं क० ख० ग० । ३ रौद्रचित्तपुरस्य ।

विमलानना । सुभाय मागधैः पठ्यमानं कनकशेखरम् ॥ ९२१ ॥ तत्र भावानुरागाय स्वभ्यस्तान्यसकलक्रिया । योगिनीव परारमाल ध्यायन्त्यस्ति तमेव सा ॥९२२॥ तस्यास्तावदगतस्यानवर्शनादखिलेऽप्यथ । विषीदति परीवारे रूपो रत्नवती सुधीः ॥९२३॥ यतः प्रभृति सुभाय नाम कनकशेखरम् । ततः प्रभृत्यसौ सखे स्वान्तशून्या मम स्वसा ॥९२४॥ मुग्धाया नूनमेतस्याश्चित्तचौरः स एव तत् । तावायास्यामि तदिव त निगूढास्यय यथा ॥ ९२५ ॥ विचिन्त्येति तथास्याते भूपालोऽपि व्यचिन्तयत् । चिमाकराय दत्तेय प्रमावस्यास्ति यद्यपि ॥९२६॥ तथापि नान्यथा संप्रत्येतस्या जीवित भवेत् । तत् प्रेष्यतेऽसौ कनकशेखराय स्वयवरा ॥ ९२७ ॥ कथञ्चित् बोधयिष्यामः पश्चादपि चिमाकरम् । ध्यात्वेति स तथाकुर्वन् रत्नवत्येति भाषितः ॥९२८॥ तातादमपि यास्यामि विमलाननया सह । अस्या हि विरहे नाह स्थातु क्षणमपि क्षमा ॥९२९॥ किन्तु नाह करिष्यामि पतिं कनकशेखरम् । यदङ्गनानां सापत्न्य महावैरस्य कारणम् ॥९३०॥ तदभीष्टस्य मित्रस्य पत्न्या भाव्य मया ततः । भवत्वेवमिति प्रोच्य तामपि प्राहिणोन्नृपः ॥९३१॥ नन्दनोर्मीश्चनेन्द्रन्यौ ते च निस्वप्रयाणकैः । देवाय वहिरुद्यानेऽत्र चिचेते समागते ॥९३२॥ ताभ्यां च विज्ञपयितुं स्वरूप प्रहितोऽस्म्यहः । देवपादान्तिके देवः प्रमाणमधुना ततः ॥ ९३३ ॥ श्रुत्वा कनकचूडस्तत् तयोः कन्यकयोस्तयोः । आवासं दापयामास चरसेनमहाधिपात् ॥ ९३४ ॥ अस्मान्सुमतिकेसरि

१ त्वमेव क० ग० घ० । २ पुरी क० घ०, पुरा ख० ग० । ३ माम कन० ख०, मामा कन० क० घ०, माम्ना कन० ग० । ४ ०मत्र्यमौ ता० क० ख० घ० । ५ स कन्यकयोस्तयो ख० । –६ ०र्हेयो ग० ।

किन्त्वियं स्यात् कुमारस्यानुरक्ता सर्वदा यदि । ततो रम्यं मया प्रोचे भान्युपायोऽत्र कः पुनः ? ॥ ९६५ ॥ स प्राहायमुपायोऽत्र यन्नाशङ्कयं त्वया क्वचित् । निर्मन्तुं[1] वा संमन्तुं[2] वा जन्तुं मारयता हठात् ॥ ९६६ ॥ सरागया किमनया भवितेति मयोदिते । स पुनः प्राह मत्तोऽपि सप्रभावेयमुच्चकैः ॥ ९६७ ॥ मयाऽऽलीढो नरो यस्मात् केवलं त्रासयेज्जनान् । श्लिष्टोऽनया[3] पुनस्तेषां नाशयेदपि जीवितम् ॥ ९६८ ॥ तदियं संमुखीकार्या कुमारेणेति तद्वचः । श्रुत्वाऽहं हन्मि शार्दूलशशैणादीन् पथि व्रजन् ॥ ९६९ ॥ जज्ञेऽनुकूला हिंसाथ जातोऽहं चातिभीषणः । बभूव प्रत्ययश्चापि वाक्ये वैश्वानरोदिते ॥९७०॥ प्राप्ता वयं च कनकचूड[4]मण्डलसन्निधौ । भद्रे ! विषमकूटाख्यस्तत्र चास्ति गिरिर्गुरुः ॥९७१॥ राज्ञः कनकचूडस्य देशोपद्रवकारिणः । तत्राम्बरीषनामानश्चरटाः सन्ति दुर्मदाः ॥९७२॥ पुरा कनकचूडेन विद्रुतास्ते च भूरिशः । ततस्तत्सुतमायान्तं तैर्ज्ञात्वा रुरुधे पथः ॥९७३॥ अथान्तिकगतेऽस्माकं दले किलकिलारवम्[5] । वानरा इव कुर्वाणाः प्रहर्तुं ते डुढौकिरे ॥ ९७४ ॥ तैश्चरटभटैरसङ्कटा अपि बलोत्कटाः । अयुध्यन्त शरासारैरसुरैरमरा इव ॥९७५॥ बहुत्वाद् द्विषतामीषद्भग्नेष्वस्मद्भटेष्वथ । लग्नः प्रवरसेनेन चरटेशेन मे रणः ॥ ९७६ ॥ ततोऽविवेकितासूनुवटकास्वादतस्तदा । ग्रीष्मेऽर्क इव जज्ञेऽहं दुर्दर्शस्तेजसा भृशम् ॥९७७॥ विपक्षः स क्षणादेव पुण्योदयविभावतः । शस्त्रास्त्रविद्याशक्तोऽपि विदधे विधुरो मया ॥९७८॥ स्यन्दनादवतीर्याथ करवालकरो रयात् । मत्संमुखमधाविष्ट स रुष्टश्चरटेश्वरः ॥ ९७९ ॥ मयाथ हिंसाश्लिष्टेन तस्याभ्यापततो जवात् । अच्छिद्यतार्द्ध[6]-

१ निरपराधम् । २ सापराधम् । ३ हिंसया । ४ कनकशेखरम् । ५ ०लिकि० ता० क० ग० घ० । ६ शरेण ।

प्रागुक्ता याऽविवेकिता । सा तस्य भूभुजो भार्या मदस्यन्मोअलोचने ! ॥ १५० ॥ सा च वैश्वानरे गर्भस्थिते तामसचित्ततः । रौद्रचित्तपुरे तत्राऽऽययौ केनापि हेतुना ॥ १५१ ॥ स हेतुः सकलत्रस्य सपुरस्य च भूभुजः । समग्रोऽपि व्यतिकरश्चोपरत्र प्रपञ्च्यते ॥ १५२ ॥ स्वरूपं चेदं भद्रे ! नाज्ञासिषमहं तदा । सदागमानुमानात्तु मया ज्ञात्वाऽधुनोच्यते ॥ १५३ ॥ अविवेकितयाऽपात्र स्थितायाः समभावत । दुष्टाभिसन्धिना तेन सार्धं परिचय स्ततः ॥ १५४ ॥ यतो द्वेषगजेन्द्रस्य प्रतिपन्नः स भूपतिः । ततोऽविवेकितामेतां स्वामिनीं मन्यते सदा ॥ १५५ ॥ मयाऽविवेकिता सा मां नीत्वा मर्त्यगतौ गता । रौद्रचित्तात् ततोऽभ्येत्य स्नेहेनास्मान् मदन्तिके ॥ १५६ ॥ मम माऽन्येव साऽद्भुत वैश्वानरमिमं सुतम् । आत्मस्वजनवर्गं च क्रमादस्मै न्यवेदयत् ॥ १५७ ॥ वैश्वानरस्य तस्यैवं तवमित्राऽभवत्तदा । रौद्रचित्ते नयाम्येनं कुमारं नन्दिवर्धनम् ॥१५८॥ दापयामि च तां हिंसामस्मै दुष्टाभिसन्धिना । येन जातु न मे कापि कार्यं व्यभिचरत्यसौ ॥ १५९ ॥ अथोक्तस्तत्र यानाय तेनाहमिदमभ्यधाम् । तत्रागच्छन्तु कनकशेखराद्या इमेऽपि किम् ? ॥ १६० ॥ ततो वैश्वानरोऽवादीदन्तरङ्गमिदं पुरम् । एकेनैव मया सार्धं यातव्यं तत्र तत्त्वया ॥ १६१ ॥ ततस्तद्वचसा तत्र गतोऽहं तेन संयुतः । अज्ञानहतचित्तत्वादविमृष्टविचारितः ॥ १६२ ॥ वैश्वानरोपरोधेन दत्तां दुष्टाभिसन्धिना । तत्रोपयम्य तां हिंसां भिक्षितोऽहं पुनर्बले ॥ १६३ ॥ मार्गेऽथ गच्छता वैश्वानरेणाहमभाषिषि । कुमाराय कृतार्थोऽहं हिंसया ते विवाहनात् ॥ १६४ ॥

१ द्वेषगजेन्द्रस्य । २ दुष्टाभिसन्धिः । ३ कास्या क० ख० ग० घ० ।

ङ्गाधिपतिर्नृपः ॥९९५॥ विभाकरपितुस्तस्य प्रभाकरधराभुजः । महाबलतयायं हि वर्त्तते स्वामिसन्निभः ॥ ९९६ ॥
कनकशेखर-राज्ञः कनकचूडस्य वर्त्तते यस्तु संमुखः । वङ्गाधिपो द्रुमो नाम स विभाकरमातुलः ॥ ९९७ ॥
स्यास्ति संमुखस्तु कुमार ! यः । स विभाकर एवायं प्रभाकरनृपात्मजः ॥९९८॥ एवमेष समाख्याति यावद् दूतो ममाग्रतः । लग्नमायोधनं तावदुभयोरपि सेनयोः ॥ ९९९ ॥ प्रभूतहेतिसंपातपर्यस्ततपनातपः । प्रसृतासृक्सरित्पूरश्चिरं जज्ञे च सङ्गरः ॥ १००० ॥ भीषणेऽथ रणे तत्र वर्त्तमाने मदोद्धुरैः । परैः समभरं दत्त्वा भग्नमस्मद्बलं
ण तु ॥ १००१ ॥ विगाहमाना नः सैन्यकासारं कासरा इव । अस्मदन्तिकमापेतुस्तेऽथ प्रत्यर्थि-
॥ १००२ ॥ अथाविवेकितासूनुवटकास्वाददारुणः । कलिङ्गाधिपमाह्वासि वचोभिः कटुभिर्युधे
शस्त्रास्त्रवृष्टिनिर्नष्टकौतुकायातखेचरः । तत्रावयोरथाक्षीणः क्षणं जज्ञे रणक्षणः ॥ १००४ ॥
मया वक्षः शक्त्या द्विविधयाप्यथ । कलिङ्गेशस्य कालिङ्गवददार्यत लीलया ॥ १००५ ॥ सार्द्धं
द्रुमानो द्रुमोऽपि सः । मया साक्षेपमाहूतो ववलेऽभिमुखं मम ॥ १००६ ॥ दूरादेवार्द्धचन्द्रेण
शिरः । मया फलमिवाकर्त्ति हिंसालिङ्गितमूर्त्तिना ॥ १००७ ॥ तयोर्भग्नं ततः सैन्यमस्माकं
च मे जयारावः सिद्धविद्याधरादिभिः ॥ १००८ ॥ इतः पूँपत्कैः कनकशेखरश्च विभाकरः ।
तैरस्त्रैर्युयुधाते महाबलौ ॥ १००९ ॥ विभाकरो रथं त्यक्त्वा निष्ठितान्याखिलायुधः । उद्यतासिरधाविष्ट

---

णः ग० । २ समुखं क० ख० ग० घ० । ३ बाणेन । ४ बाणैः ।

चन्द्रेण शिरः कमललीलया ॥९८०॥ अमूरय मुदासाक बले कलकलः कला। व्यधुर्ममोपरिष्टाच्च पुष्पवृष्टिं दिवौकसः ॥ ९८१ ॥ हरिनाथ बल धन दीनमङ्गीकृत मया। कुमारेण च सम्प्राप्तौ कुशावर्तपुरं ततः ॥ ९८२ ॥ राजा कनकचूडोऽसहायस्या सुदिनेऽधिकम्। आचपोरतिविमर्दोत्प्रवेशकमकारयत् ॥ ९८३ ॥ विमलाननां कनकशेखरेण शुभे दिने। मया रत्नवती चाथ पृथ्वीशः पर्यणाययत् ॥ ९८४ ॥ दिनत्रये व्यतीतेऽथ क्रीडितुं ते उभे अपि। पूर्वमुद्युक्तपानमावामापृच्छय जग्मतुः ॥ ९८५ ॥ आवामपि नृपास्थाने चावहुर्चाविहे तदा। तावदाविरभूद् दासीपुत्रवेत्सुमतो चरिः ॥ ९८६ ॥ किमेतदिति संभ्रान्तं यथावास्थानमुत्थितम्। इते नवोढे केनापीति प्रवाद मचामुमोत् ॥ ९८७ ॥ अथासमक्षमुपाल दधावे तस्य पृष्ठतः। ददर्श परसेनां च व्रजन्ती नातिदूरतः ॥ ९८८ ॥ तत्र वैमाकरं नामोद्घुष्यमाणं च मागधैः। निशम्य सर्वैरसामिमिन्वित स्वस्वचेतसि ॥ ९८९ ॥ पूर्वं यस्य प्रभावस्या दशाऽऽसीद्विमलानना। सोऽयं विभाकरो वध्यहारं कुरुते ध्रुवम् ॥ ९९० ॥ ध्यात्वेति पश्चेर्षात्मेस्वसिमधुवेष्टिते मया। चलेऽरिवलं मार्गैर्गजाभोत इव त्रिभिः ॥ ९९१ ॥ अरुध्यन्त ततीशाच चपामि सुसमागताः। मया कनकचूडेन तत्सुतेन च ते त्रयः ॥ ९९२ ॥ इतः कनकचूडापाऽऽवस्थो यः पूर्वमागतिम्। नन्दनोर्वीशमन्द(न्दि)न्योस्तदा चास्ति स मेऽन्तिके ॥९९३॥ अरे ! विकट ! आनीय क एते नायकाग्रपः। एवं च स मया पृष्टः पृष्ठार्थविदुरोऽवदत् ॥ ९९४ ॥ त्रिधाभूतपरानीकमध्ये यः संमुखस्तव। सोऽयं समरसेनाख्यः कलि

१ चिन्तयता० ता० क० ग० घ०। २ ०चूडक० क० ख० घ०; ०सुतक० ग०। ३ ०कम् क० ख० घ०।

ङ्गाधिपतिर्नृपः ॥९९५॥ विभाकरपितुस्तस्य प्रभाकरधराभुजः । महाबलतयायं हि वर्त्तते स्वामिसन्निभः ॥ ९९६ ॥
राज्ञः कनकचूडस्य वर्त्तते यस्तु संमुखः[2] । वङ्गाधिपो द्रुमो नाम स विभाकरमातुलः ॥ ९९७ ॥ कनकशेखर-
स्यास्ति संमुखस्तु कुमार ! यः । स विभाकर एवायं प्रभाकरनृपात्मजः ॥९९८॥ एवमेष समाख्याति यावद् दूतो
ममाग्रतः । लग्नमायोधनं तावदुभयोरपि सेनयोः ॥ ९९९ ॥ प्रभूतहेतिसंपातपर्यस्ततपनातपः । प्रसृतासृक्सरि-
त्पूरश्चिरं जज्ञे च सङ्गरः ॥ १००० ॥ भीषणेऽथ रणे तत्र वर्त्तमाने मदोद्धुरैः । परैः समभरं दत्त्वा भग्नमस्मद्बलं
क्षणात् ॥ १००१ ॥ विगाहमाना नः सैन्यकासारं कासरा इव । अस्मदन्तिकमापेतुस्तेऽथ प्रत्यर्थि-
पार्थिवाः ॥ १००२ ॥ अथाविवेकितासूनुवटकास्वाददारुणः । कलिङ्गाधिपमाह्वासि वचोभिः कटुभिर्युधे
॥ १००३ ॥ शस्त्रास्त्रवृष्टिनिर्नष्टकौतुकायातखेचरः । तत्रावयोरथाक्षीणः क्षणं जज्ञे र[1]णक्षणः ॥ १००४ ॥
हिंसावेशान्मया वक्षः शक्त्या द्विविधयाप्यथ । कलिङ्गेशस्य कालिङ्गवद दार्यत लीलया ॥ १००५ ॥ सार्द्धं
कनकचूडेन युद्धमानो द्रुमोऽपि सः । मया साक्षेपमाहूतो ववलेऽभिमुखं मम ॥ १००६ ॥ दूरादेवार्द्धचन्द्रेण[3]
द्रुमस्याथ द्रुतं शिरः । मया फलमिवाकर्त्ति हिंसालिङ्गितमूर्त्तिना ॥ १००७ ॥ तयोर्भग्नं ततः सैन्यमस्माकं
मुदितं पुनः । चक्रे च मे जयारावः सिद्धविद्याधरादिभिः ॥ १००८ ॥ इतः पृषत्कैः[4] कनकशेखरश्च विभाकरः ।
युयुधाते महाबलौ ॥ १००९ ॥ विभाकरो रथं त्यक्त्वा निष्ठितान्याखिलायुधः । उद्यतासिरधाविष्ट
युद्ध्वोच्चैर्दैवतैरस्त्रैर्युयुधाते महाबलौ ॥ १००९ ॥ विभाकरो रथं त्यक्त्वा निष्ठितान्याखिलायुधः । उद्यतासिरधाविष्ट

१ महारणः ग० । २ समुखं क० ख० ग० घ० । ३ बाणेन । ४ बाणैः ।

न्तु कनकध्वजम् ॥ १०१० ॥ स्यन्देन स्यन्दनं हित्वा ततः कनकध्वजः । कृपाणपाणिस्तं योद्धुं दधावे क्रोधदुर्धरः ॥ १०११ ॥ सन्नाहसज्जि चन्द्र कृत्वा ततः कनकध्वजः । मारस्य खड्गमुष्ट्योर्ष्वा विमाकरमपातयत् ॥१०१२॥ दर्पोद्धुरं फलकस विनिमार्य निजे पदे । वायुदानाम्बुसेकाद्यैस्त समाश्वासयच्च सः ॥ १०१३ ॥ लब्धसंज्ञ तमूचे च साधु साधु नृपात्मज ! । न क्षत्रियधनं तच्च त्वया मुक्त मनागपि ॥१०१४॥ तदिदानीं पुनर्योद्धुमुत्तिष्ठ क्षत्रियोत्तम ! । एतावता जितो नासि विजयी चास्मि नेयता ॥ १०१५ ॥ तद्वचोभिस्ततो हृष्टस्त ममाषे विमाकरः । आर्य ! पर्याप्तमधुना युधाऽस्त्विमूलया ॥ १०१६ ॥ भवता विजितो नाहं करवालेन केवलम् । अमुना चरितेनापि किन्तु माहात्म्यशंसिना ॥ १०१७ ॥ उक्तवन्त तमेव स्वरथे कनकध्वजः । स्वयमारोपयामास सहोदरमिवादरात् ॥ १०१८ ॥ नयोढे राजपुत्र्यौ ते गृहीत्वाथ विवाहवाः । पुरे चयमविक्षाम हृष्टोमोदयोमिते ॥ १०१९ ॥ ततः प्रमुदिताशेषपौरलोकविलोकितौ । अगमतुर्नृपकनकध्वजौ स्वस्वसेश्मनि ॥ १०२० ॥ वीरो कलिङ्गसङ्ख्यो विख्याते येन लीलया । पराजितः सोऽप कुमारो नन्दिवर्द्धनः ॥ १०२१ ॥ अहो ! धैर्यं महोरूपमहो ! भाग्यमहो ! बलम् । तद्विमितममर्त्योऽयं न मर्त्यो भवतीक्षः ॥ १०२२ ॥ इय रत्नवती धन्या या बभूवास्य वल्लभा । धन्या वयमपि येप यासां दृष्टिपथ ययौ ॥ १०२३ ॥ पद्मा सकलमप्येतन्नूनं धन्यतम पुरम् । यदद्भुतचरित्रेण पवित्रीक्रियतेऽमुना ॥ १०२४ ॥ शृण्वन्नगरनारीणामिति प्रीतस्तदा गिरः ।

१ वेगेन । २ नृपात्मजः ता०, नृपात्मजम् क० म० घ० । ३ ०मुना ता० ।

अहमप्यगमं राजकुलाभ्यर्णे रथस्थितः ॥ १०२५ ॥ इतश्च पद्मनाथस्य दुहिता जयवर्मणः । आस्ते कनकचूडस्य प्रिया मलयमञ्जरी ॥१०२६॥ तस्याः कन्यास्ति कन्दर्पनृपक्रीडावनावनिः । रूपास्तत्रिदशस्त्रैणरूपा कनकमञ्जरी ॥१०२७॥ तां च वातायनासीनां पश्यन्तीं मां तदादरात् । विव्याध मदनव्याधः सारङ्गीमिव सायकैः ॥१०२८॥ तस्यां लावण्यपीयूषवाप्यां दृष्टिः ससंभ्रमा । पपात तृषितश्रान्तपान्थस्येव ममापि हि ॥ १०२९ ॥ तारामेलक्षणादेवेक्षणेन क्षणमीक्षणम्[1] । अयुज्यत मिथश्चित्तं चित्तेन च तदावयोः ॥ १०३० ॥ ततस्तेतलिना सारथिना ज्ञात्वास्मदाशयम् । लाघवस्य भयान्नुन्नरथः स्वावासमासदम्[2] ॥ १०३१ ॥ विमुक्ताशेषकर्तव्यौ स्मरज्वरभरातुरौ । आवासेऽथ[3] दिवाशेषमनयाव[4] कथञ्चन ॥ १०३२ ॥ किं ममावस्थितस्यात्र सांप्रतं गततेजसः । इतीव विमृशन् भानुर्द्वीपान्तरमथागमत् ॥१०३३॥ वासरेणाप्यथ क्षीणं तत्क्षणं सह सन्ध्यया । तादृग्मित्रवियोगो हि विसोढुं केन शक्यते ? ॥१०३४॥ विद्राणवदनाम्भोजा विदूरीभूतवल्लभा । म्लानिमासादयामास चक्रवाकीव पद्मिनी ॥१०३५॥ कज्जलैरिव संपूर्णं कर्दमैरिव मेदुरम् । तापिच्छैरिव[5] संच्छन्नं ध्वान्तग्रस्तं बभौ जगत् ॥१०३६॥ तमालकज्जलश्यामध्वान्तपन्नगमौलिषु । बभुः फणामणिनिभास्तारकास्तारकान्तयः ॥ १०३७ ॥ अगाधे तिमिराम्भोधौ रत्नौघा इव सर्वतः । प्रदीपाः प्रस्फुरन्ति स्म प्राज्यप्रसृमरप्रभाः ॥१०३८॥ अथोल्ललास शीतांशुः पूर्वा-

---

१ ०क्षण इवे० ता० क० ख० घ० । २ ०दृशम् घ० । ३ आवामथ क० ख० ग० । ४ ०षं गमयावः ग० ।
५ तमालवृक्षैरिव ।

प्रागमवाप्नुसे । तिलकमान्वन श्यामकर्पूरलक्ष्मीवतः ॥१०३९॥ प्रासादः कलशेनेव छत्रेणेव नरेश्वरः । रेजे चन्द्रेण पूर्वाद्रिर्विनोदस्यशालिना ॥१०४०॥ तमःकरिघटां विष्वग् विचरन्तीं जगद्वने । कराग्रैर्दारयामास मृगेन्द्र इव चन्द्रमाः ॥ १०४१ ॥ सुधाभिरिव निर्धौतं क्षीरोदेनेव पूरितम् । कुङ्कुमासैरिवाकीर्णं ज्योत्स्नापूर्णं जगद् बभौ ॥ १०४२॥ विशिखैरिव कामस्य करयोः शशिनः करैः । त्रियामा यापयामेव सागास्थ्कच्छादयायायोः ॥ १०४३ ॥ प्राप्यां प्रादुर्बभूवाथ प्रभावश्च प्रेमाप्रमोः । मित्राम्भोराशिमौर्वाग्नेर्ज्वालाजालमिवोत्थितम् ॥ १०४४ ॥ कराग्रैरथ पूर्वाद्रितटान्यालम्ब्य वारिधेः । निर्ययावर्यमानेककोककलोकविलोकितः ॥ १०४५ ॥ तमस्तरुवनं विष्वग् कुसुमं विस्फुरत्करः । मूलादुन्मूलयामास यथेनावनवारणः ॥ १०४६ ॥ विध्वस्ते तिमिरे दूरं वैधेनेव विवस्वता । लोचनानीव पद्मानि विकासं शिश्रियुस्तराम् ॥ १०४७ ॥ उदितेऽप्येषमुष्णांशौ समायातेऽपि तेतलौ । च्यायं त्वामेव पद्माक्षीं नाहं किञ्चिद्वेत्त्ययम् ॥ १०४८ ॥ इतः कनकचूडेन प्रोचे कनकशेखरः । क्षिपज्ञयसमुद्भूत दर्पोविषयशालिना ॥ १०४९ ॥ येनानेन क्षितौ नन्दिवर्धनेन महाबलौ । कलिङ्गपञ्चाधिपती न सामान्यः कुमार । सः ॥ १०५० ॥ न च प्राप्यम्ययेनापि वयमस्य महात्मनः । निष्कम्प वत्स ! गच्छामः प्राप्तकालमिदं ततः ॥ १०५१ ॥ विधेते मम मलयमञ्जरीकुक्षीसंभवे । मणिमञ्जरीकनकमञ्जर्यौ तनये उभे ॥ १०५२ ॥ ततः पुरैव सा नन्दिवर्धनज्येष्ठयाचे । पीठवर्धनसंज्ञाय दत्तास्ति मणिमञ्जरी ॥ १०५३ ॥ युज्यते सांप्रतं

१ रजनी । २ सूर्येण । ३ विस्फु० ष० ।

तस्मै दातुं कनकमञ्जरी । तथेति तां पितुर्वाचं मेने कनकशेखरः ॥ १०५४ ॥ प्रदातुमथ तां मह्यं नृपः कनकमञ्जरीम् । मत्पार्श्वे प्रजिघायाशु मन्त्रिणं विमलाभिधम् ॥ १०५५ ॥ सोऽप्येत्य नत्वा मां प्रोचे देवस्त्वां देव ! वक्त्यदः । यदस्ति दुहितास्माकं नाम्ना कनकमञ्जरी ॥ १०५६ ॥ तामस्मदुपरोधेन कुमारो बन्धुवत्सलः । स्वपाणिग्रहणेनाशु प्रमोदयितुमर्हति ॥ १०५७ ॥ मयाथ मुदितेनास्यं पार्श्वस्थस्य स्वसारथेः । वीक्षितं तेतलेः सोऽपि प्रोचे सद्भावकोविदः ॥१०५८॥ कुमारेणानुवर्त्योऽयं कुशावर्त्तपुरेश्वरः। प्रणयप्रार्थना देव ! तस्येयं मान्यतां ततः ॥ १०५९ ॥ प्रमाणं नस्त्वमत्रासि त्वं प्रतीत्युदिते मया । महाप्रसाद इत्युक्त्वा समुत्तस्थौ स मन्त्र्यथ ॥१०६०॥ स्वरूपेऽथ यथावृत्ते गत्वा तेन निवेदिते । प्रमोदमेदुरमनाः समभूद् भूमिवासवः ॥ १०६१ ॥ सायं लग्नेऽथ तत्रैव वासरे स नरेश्वरः । आवयोः कारयामास करग्रहमहोत्सवम् ॥ १०६२ ॥ तत्र चिन्तितसंजाते पाणिग्रहमहामहे । तदाभूदावयोः प्रीतिः कापि वाचामगोचरः ॥ १०६३ ॥ इतो विभाकरस्यापि विहिते व्रणकर्म्मणि । संजातदेहारोग्यस्य मैत्री सार्द्धं मयाऽभवत् ॥१०६४॥ संमान्य सोऽन्यदा राज्ञा विसृष्टः स्वपुरं ययौ । ते चाम्बरीषचरटा मयाऽपि हि विसर्जिताः ॥ १०६५ ॥ कालं कियन्तमप्यस्थां तत्रैव विषयानहम् । भजन्कनकमञ्जर्या रत्नवत्या च संयुतः ॥ १०६६ ॥ अन्यदा यामिनीयामे चरमेऽहमचिन्तयम् । पुण्योदयस्य माहात्म्यमविदन्मूढमानसः ॥१०६७॥ अहो ! वैश्वानरस्यास्य कोऽपि स्नेहभरो मयि । मत्कार्यायैष मुक्तात्मकार्यस्ताम्यति यत्सदा ॥ १०६८ ॥

१ रा० ख० ।

प्रियापा अपि हिंसापा अहो ! माहारम्यमद्भुतम् । मित्रेण वर्णितानेन यास्कारगसौ ध्रुवम् ॥ १०६९ ॥ मया पञ्च विठौ वज्रकठिनाधिपती नृपौ । साधुवादम पञ्चाशे मनेष्वस्यन्तदुर्लभः ॥ १०७० ॥ यदसौ च मयाऽप्रापि प्रिया कनकमञ्जरी । प्रभापासिञ्चयः सोऽयं समप्रोऽप्यनयो खलु ॥ १०७१ ॥ सुदेवो यो ममाभीष्टो प्रशसति निरन्तरम् । स एव मे सुहृत् प्रेयान्प्रतिपक्षः परः पुनः ॥ १०७२ ॥ एष मे व्यापतः क्रूरविषवाऽज्ञनि सा यया । विनापि वटकास्वाद साधादैश्वानरोऽभवम् ॥ १०७३ ॥ ततो निर्मन्तुमप्यारमपरिच्छदमहं सदा । आक्रोशामि ताडयामि सर्वं ज्वलितावपः ॥ १०७४ ॥ हिंसयाश्लिष्यमाणस्य पुनः संततरक्तया । बभूव मम पापर्द्धिव्यसन सदर्शनतम् ॥१०७५॥ तच्च मचेष्टितं दृष्ट्वा दध्यौ कनककेसरः । अहो ! किमिदमेतस्य चरित्रमसमञ्जसम् ॥१०७६॥ हिंसावैश्वानराश्लिष्टो यदयं पापकर्मणि । प्रवर्त्तमानो धर्मस्य दूरात् दूरेण वर्त्तते ॥ १०७७ ॥ तदह वारया म्येनमेतस्मात्पापकर्मणः । येत्पुनः कथमप्येष स्यात् सर्वगुणभाजनम् ॥ १०७८ ॥ केवलस्य च मे वाक्य म्नाविभ कोपनम् । तातास्यर्पे पुनः प्रोक्तः कुर्यात् तथावलज्जया ॥१०७९॥ तदहं शिक्षयिष्यामि प्रस्तावे तात संयुतः । ध्यात्वेति स गृहीतार्थ चकार पितरं निजम् ॥१०८०॥ अथान्येद्युः समासीनो मां नमस्कर्तुमागतम् । भूर्ख माश्वसदूर्पीशः धीर्यैर्धैर्यादिभिर्गुणैः ॥१०८१॥ वत्सवोऽप्यापदयातेऽङ्गेनैव स्वरूपतः । कुशलो नृपयस्येन किन्तु पद र्पासूषम् ॥ १०८२ ॥ स कीदृशाति भूपेन पृष्टः स पुनरभ्यधात् । सद्वैश्वानरो हिंसा भार्या चास्त्यस्य गर्हिता

१ ०वर्द्धमा० क० ख० ग० घ० ।

प्रविष्टे शुचि तस्मुख्ये प्रहारैर्जर्जरीकृतः ॥ १९५ ॥ कृते दृष्या वाहने थे मूतास्तिलकरोगत । तस्करैर्लुण्टित सार्थः प्रस्तुते सरमाहने ॥ १९६ ॥ स्नातेऽथ रोहणगिरौ धूलिरेखामयस्करे । प्रकृते धातुवादे च क्षार एव बभूव मे ॥१९७॥ अभ्यस्ते पूर्वरमणे विना धूर्तैर्निमन्त्रितः । शुचि नोकामपि प्राप जातः कस्यापि कर्मकृत् ॥ १९८॥ यदि वा किं बहुकेन पुस्ताकामभिक्षिणा । न भिक्षापि तदा लेभे मया पुण्योदय विना ॥ १९९ ॥ ततश्चास्य न्निर्विण्णं कृत्वा पादप्रसारिकाम् । संस्थित मासुवासैर्वं सागरः स हितः किल ॥ २०० ॥ न विषादपरैरर्थाः प्राप्यते धनशेखर ! । अविषादः श्रियो मूलं यतो धीराः प्रचक्षते ॥ २०१ ॥ विषाद सर्वथा प्रोज्झ्य तदाऽवलम्बस्व पौरुषम् । पौरुषात्सुलभा लक्ष्मीः प्रतिकूलेऽपि वेधसि ॥ २०२ ॥ किञ्चालीकमपि प्रोच्य मुषित्वापि परं जनम् । छद्मममपि निर्वास्य सर्वथाऽर्ज्यं धनं नरैः ॥ २०३ ॥ धनी हि विहितानेकपातकोऽपि धनोत्सवा । श्लाघ्यते सर्वलोकेन लभते वेप्सित सुखम् ॥ २०४ ॥ ततो धैर्यं समालम्ब्य कुरु द्रव्यार्जनोद्यमम् । सुवन्ति व्यसने नार्यः पुमांसो न पुनर्यतः ॥ २०५ ॥ एवं प्रोत्साहितस्तेन धैर्यमालम्ब्य सत्वरम् । पापकर्मसु यत्नोऽपि प्रवृत्तोऽहं धनाशया ॥ २०६ ॥ तथापि हि न संपन्नं विना पुण्योदय मम । धनगन्धोऽपि रम्भोरु ! मत्पुत्रानर्थसन्तति ॥ २०७ ॥ पुण्योदयविहीनस्य तदा मिथ्याभिमानतः । न ययौ श्वशुरस्याह गृहे नापि पितुः क्वचित् ॥२०८॥ किन्तु मां मैथुनः सोऽपि स्त्रीसेवायां महद्गुरुः । तस्यामपि यवस्यायां प्रेरयन्नेष तिष्ठति ॥२०९॥ केवल तदवस्थं स्त्री क्षणाऽप्यापि न कापि माम् । वीक्ष्य( "च" )तेऽहं ततः स्थिते इयमीदृक्स्यमावतः ॥ २१० ॥

एवं विविधदेशेषु पापकर्म्मपरायणः । ताभ्यां पापवयस्याभ्यां क्लेश्यमानोऽभ्रमं तदा ॥ २११ ॥ इतश्चानन्द-
नगरे सूरिरुत्तमनामकः । अन्येद्युर्बहिरुद्याने समेत्य समवासरत् ॥ २१२ ॥ तं नन्तुं सपरीवारः स हरिः पृथिवी-
पतिः । पौरलोकश्च सर्वोऽपि प्रययौ प्रीतमानसः ॥ २१३ ॥ नत्वा नत्वा निषण्णेषु सर्वेष्वथ यथोचितम् । भगवान्
विदधे धर्म्मदेशनां पापनाशिनीम् ॥ २१४ ॥ तां श्रुत्वा हरिराजोऽथ चेतस्येवमचिन्तयत् । विश्वदृश्वा प्रभुरसौ
तदमुं प्रश्नयाम्यदः ॥ २१५ ॥ किं मां तदाक्षिपत् वार्द्धौ वयस्यो धनशेखरः ? । किं वा दृष्टः स देवोऽस्य ?
किं जीवति मृतः स च ? ॥ २१६ ॥ यावत्स चिन्तयत्येवं तावद् ज्ञात्वा तदाशयम् । समभासत तं सूरिः स
चतुर्ज्ञानसेवधिः ॥ २१७ ॥ यदेतच्चिन्तितं भूप ! त्वया यद्वारिधौ कथम् । क्षिप्तोऽहं सुहृदेत्यादि तत्राकर्णय
कारणम् ॥२१८॥ अन्तरङ्गौ हि विद्येते तस्य सागरमैथुनौ । वयस्यौ स तयोर्दोषो नैव तस्य तपस्विनः ॥२१९॥
सागरेण यतोऽमुष्य त्वद्रत्नग्रहणे मनः । मयूरमञ्जरीभोगे विदधे मैथुनेन च ॥ २२० ॥ तद्वशाच्च त्वयि
क्षिप्तेऽर्णवे देवोऽर्णवाधिपः । सोऽकुपत् तस्य संरक्ष्य त्वां वार्द्धौ च तमक्षिपत् ॥ २२१ ॥ तथापि न मृतस्तत्र
किन्तु तीर्त्वाम्बुधिं तदा । सोऽधुनानेकदेशेषु भ्राम्यन्नस्ति धनाशया ॥ २२२ ॥ तदेवं पापसुहृदोस्तयोरेव
नरेश्वर(°र !) । दोषोऽयं न पुनस्तस्य प्रकृत्या सुन्दरो हि सः ॥ २२३ ॥ तत् समाकर्ण्य कारुण्यं सुतरामुद्वहन्नयि ।
मुनिनाथं महीनाथः पप्रच्छ पुनरप्यदः ॥ २२४ ॥ ताभ्यां पापवयस्याभ्यां स कदा धनशेखरः । वियोगं लप्स्यते
नाथ ! शशंस गुरुरप्यथ ॥ २२५ ॥ पुरेऽस्ति शुभ्रचित्ताख्ये नृपो नाम्ना सदाशयः । वरेण्यताभिधा तस्य देवी

बभाव विभुता ॥ २२६ ॥ तत्कालसमये तस्य गुणसमारमाश्रनम् । मुक्तवाग्रसरस्यास्ये विधेते कन्यके उमे ॥ २२७ ॥ ततस्ते लप्स्यते कन्ये स यदा धनशेखरः । तदाभ्यां पापमित्राभ्यां नि सन्देह वियोक्ष्यते ॥ २२८ ॥ राजा कर्म्मपरीणामः कार्यस्यास्य च चिन्तकः । अतो विमुच्य तच्चिन्तां स्वकार्ये यत्यतां नृप ! ॥ २२९ ॥ तभि सम्भाष मचिन्तां विमुच्य वसुधाधवः । मुनीन्द्रमिति पप्रच्छ पुनः संजातसंशयः ॥ २३० ॥ यदुक्त नाथ ! युष्माभिर्यथासौ धनशेखरः । पापमित्रसमायोगात् तत् तादृक् कर्म्म निर्म्ममे ॥ २३१ ॥ स्वरूपतः पुनरय मत्रकस्तत्र किं पुमान् । निर्मलोऽपि स्वरूपेण परदोषेण दुष्यते ? ॥ २३२ ॥ सूरिः प्रोचे समस्त्येव महीभर्तरित्र यतः । द्विविधो यत्र लोकोऽय पाथाम्यन्तरभेदतः ॥ २३३ ॥ तत्र बाह्यलोकदोषा लगन्ति न लगन्ति वा । दोषास्त्वान्तरलोकानां लगन्त्येव शरीरिणाम् ॥ २३४ ॥ तत्रान्तरङ्गलोकानां दोषकारित्वसूचकम् । आकर्ण्णय महीनाथ ! कथयामि कथानकम् ॥ २३५ ॥ आस्ते मनुजगत्याख्या नगरीह गरीयसी । राजा कर्म्मपरीणामस्तत्र चास्ति महाभुजः ॥ २२६ ॥ स कालपरिणत्याख्यमहादेव्या समन्वितः । संसारनाटकं पश्यन्नित्यमास्ते यथा सुखम् ॥ २२७ ॥ तस्यानन्तान्यपत्यानि किन्तु तान्यस्य मन्त्रिणः । अविवेकादयश्चदोषादृशाद्गोपयन् ॥२२८॥ इतश्च तत्र विख्यातः सर्वभावस्वभाववित् । यथास्थितार्थवादी च सिद्धान्तोऽस्ति परः पुमान् ॥२२९॥ मन्त्रोऽरिष्टमनिष्टं वा किमत्र भगवन्निति । अप्रबुद्धाभिधोऽपृच्छदन्तेवासी समेत्यदा ॥ २४० ॥ सुखमिष्टमनिष्टं तु दुःखं तेनेति भाषिते । तयोः कारणमप्राक्षीदप्रबुद्धः पुनर्गुरुम् ॥ २४१ ॥ गुरुरप्यस्यपात्रान्य प्रसादेतः सुपालितम् ।

दुष्पालितं तु दुःखस्य तदेवैकं निबन्धनम् ॥ २४२ ॥ अप्रबुद्धः पुनः प्रोचे प्रत्यक्षोपहतं ह्यदः । यतो राज्यमिह स्वल्पतमानामेव विद्यते ॥ २४३ ॥ सुखदुःखे पुनर्जीवाः सर्वेऽपि भववर्त्तिनः । दृश्यन्तेऽनुभवन्तोऽमी तदिदं घटते कथम् ? ॥ २४४ ॥ सिद्धान्तः प्राह नह्येतत्सुखदुःखैककारणम् । बाह्यं राज्यं मया प्रोचे किं तर्ह्याभ्यन्तरं ननु ॥२४५॥ तच्चास्त्येव समस्तानां जीवानां भववर्त्तिनाम् । ततो ये पालयन्तीदं सम्यक् तेषां भवेत्सुखम् ॥२४६॥ ये तु दुष्पालितमिद कुर्वते मूढबुद्धयः । तेषां दुःखं भवेत्तस्मान्न प्रत्यक्षविरोधिता ॥२४७॥ किमेकरूपं तद्राज्यमथवानेकरूपकम् । इति पृष्टोऽप्रबुद्धेन सिद्धान्तः पुनरभ्यधात् ॥२४८॥ सामान्येनैकरूपं तद्विशेषेणेतरत्पुनः । तत्र सामान्य राजयस्य स्वरूपं भृणु सुन्दर ! ॥ २४९ ॥ विश्वत्रितयविख्यातः समग्रैश्वर्यभाजनम् । संसारिजीवनामात्र राज्ये तावन्नरेश्वरः ॥ २५० ॥ साम्यवीर्यामलज्ञानप्रमुखै रत्नराशिभिः । भास्वरैः पुरितस्तत्र कोशश्चात्यन्तपुष्कलः ॥ २५१ ॥ गाम्भीर्यौदार्यशौर्यादिस्यन्दनश्रेणिसुन्दरम् । यशःप्रश्रयसौजन्यप्रमुखेभविभूपितम् ॥ २५२ ॥ वाग्मित्वबुद्धिमत्वादिवाजिराजिविराजितम् । दाक्षिण्यसौमनस्यादिपदातिपरिपूरितम् ॥२५३॥ क्षीरनीरधिसंकाशं भुवनानन्ददायकम् । चतुरङ्गं महासैन्यं राज्ये तत्र च सुन्दरम् ॥ २५४ ॥ विशेपकम् ॥ संसारिजीवराजेन्द्रहितकारी चतुर्मुखः । तत्र चारित्रधर्म्मश्च भूपतिः प्रतिनायकः ॥ २५५ ॥ जैनसात्त्विकचित्तादिपुरग्रामादिसंभृता । राज्ये च पृथिवी तत्र चित्तवृत्त्यभिधाटवी ॥ २५६ ॥ कपायनोकपायाख्यप्रमादाद्याः सहस्रशः । चौरास्तस्य च राज्यस्य सन्त्युपद्रवकारिणः ॥ २५७ ॥ मध्ये तेषां च चौराणां स्वामिनौ भ्रातरावुभौ । संस्तः कर्म्मपरीणाममहामोहौ

महाबला ॥ २५८ ॥ चतुरङ्गबलोपेतौ विक्रमाक्रान्तविष्टपौ । तौ चात्यन्तमदाध्मातौ मन्येते इति चेतसि ॥ २५९ ॥
कोऽस्य संसारिजीवोऽत्र ? को वा चारित्रधर्मकः ? । अस्मदीयमिदं राज्यं नात्र कोऽप्यपरः प्रभुः ॥ २६० ॥ ततः
सर्वेऽपि संभूय वरटास्ते महोत्सवम् । राज्ये कर्मपरीणामं स्थापयामासुरत्र तम् ॥ २६१ ॥ राजसभामथविच
प्रसवीनि पुराण्यथ । चिन्तयित्वा महाटम्यां विष्वक् सोऽपि न्यवीविशत् ॥ २६२ ॥ राज्यस्थितिं विधायान्यामपि
सेनां समर्प्य च । अस्थापयच्च तेष्वेव महामोहं महीपतिम् ॥ २६३ ॥ स्वयं पुनरसौ कर्मपरीणामो महानृपः ।
देव्या समन्वितः कालपरिणत्याऽनपायिनया ॥ २६४ ॥ पुर्यस्यां मनुजगतौ सदा संसारनाटकम् । वीक्षमाणः परं
सदैव राज्यसौख्यं निराकुलः ॥ २६५ ॥ युग्मम् ॥ किन्तु कर्मपरीणामस्तत्सामर्थ्यं विदन्निव । संसारिजीवराजस्य
राज्यं न द्वेष्टि सर्वथा ॥ २६६ ॥ तस्मै हित च चारित्रधर्मं तमनुवर्तते । कानिचित्कुमकस्थानि सम्भूय कुरुतेऽपि
च ॥ २६७ ॥ ततश्चारित्रधर्मोऽपि प्रपेदे सपरिच्छदः । मध्यस्थोऽयमिति कृत्वा स्वामिभावेन तं नृपम् ॥ २६८ ॥
महामोहस्तु संसारिजीवराजं महोद्धुरः । चारित्रधर्मसैन्यं च न तृणायापि मन्यते ॥ २६९ ॥ ततः संसारिजीवोऽसौ
पापप्राज्यं निजं न तत् । जानाति कोशसैन्यादिसमृद्धिपरिपूरितम् ॥ २७० ॥ प्राप्तान्तरो महामोहः स सापरस्परि-
च्छदः । तस्य राज्यं तदाक्रम्य प्रेष्यप्रायं करोति तम् ॥ २७१ ॥ यदा पुनः स संसारिजीवो राज्यं कथञ्चन । चेष्टि
तत् वाघात्मीयं विगृह्णाति तदा क्षिपम् ॥ २७२ ॥ स च त विग्रहाख्यो महामोहमनेकशः । निर्जीवसा विमयते

१ गप म° स० । २ °या यथा ग० । ३ सर्वं तु मनु° स० । ४ क्षिपम् ग० ।

तेनाप्येष विजीयते ॥ २७३ ॥ यदा विजयते यावत्तावदाप्नोति शं तदा । विजीयते यदा यावद् दुःखं तावत्तदा पुनः ॥२७४॥ यदा तु वीर्यमतुलं स प्राप्याभ्यासयोगतः । महामोहपुरोगांस्तान् सर्वान् विजयते रिपून् ॥२७५॥ तदा निष्कण्टकं राज्यमासाद्य तदसौ निजम् । निःशेषक्लेशनिर्मुक्तः प्राप्नोति परमं सुखम् ॥ २७६ ॥ युग्मम् ॥ तदेवं तस्य तद्राज्यं कारणं सुखदुःखयोः । पालनापालनाज्जातमेकमेव शुभाशय ! ॥ २७७ ॥ स्वामिन् ! संसारिजीवस्य तस्य किं वर्त्ततेऽधुना । सौराज्यमुत दौराज्यमिति शिष्योऽवदत्ततः ॥ २७८ ॥ सिद्धान्तः प्राह दौराज्यं वर्त्तते तस्य संप्रति । वराकोऽद्यापि तद्राज्यं न वेत्त्येष निजं यतः ॥ २७९ ॥ बहिरङ्गेषु देशेषु स हि संप्रति दुःखभाक् । सागरेण भ्रम्यमाणो मैथुनेन च विद्यते ॥ २८० ॥ तत्पुनस्तस्य चारित्रधर्म्माद्यं निखिलं बलम् । निरुद्धं परितोऽप्यस्ति महामोहादिवैरिभिः ॥ २८१ ॥ अप्रबुद्धः पुनः प्राह श्रुतं तावदिदं मया । सामान्येनैकधा राज्यं सुखदुःखकृदान्तरम् ॥ २८२ ॥ अथ पूज्यैर्यदा(°र्यथा°)ख्यातं यत्तदेव विशेषतः । अनेकरूपं तच्छ्रोतुमहमिच्छामि सांप्रतम् ॥ २८३ ॥ सिद्धान्तोऽप्याह संसारिजीवेनायं महीभुजा । चक्रे कर्म्मपरीणामः प्रमाणं सर्वकर्म्मसु ॥ २८४ ॥ ततश्च स्वेच्छया राज्यमिदमेव पृथक् पृथक् । स तेभ्यो निजपुत्रेभ्यः सर्वेभ्योऽपि प्रयच्छति ॥२८५॥ अनन्तेषु ततस्तेषु तद्दत्तं तेन गच्छति । अनेकरूपतां सौख्यदुःखहेतुर्यथोचितम्[1] ॥ २८६ ॥ तदेवमन्तरङ्गं तन्महाराज्यं विशेषतः । अनेकरूपं जानीहि बहुत्वात् तव तनूभुवाम् ॥ २८७ ॥ अप्रबुद्धोऽवदत्कर्म्मपरिणामतनूरुहाम् ।

१ °दितम् ख० ।

तत्राज्य कुर्वतां तेषां संपर्क कस्य किं प्रभो ! ॥२८८॥ सिद्धान्तोऽथोपवाक्यपातमेव यतस्य सूनवः । अनन्तास्ते
ततस्तेषां कियतां कथ्यते कथा ! ॥ २८९ ॥ तथापि यदि कल्याण ! मदस्कौतूहलं तव । व्यापकः कथनोपाय
स्वतोऽस्त्येषं निशम्यताम् ॥ २९० ॥ सन्ति कर्म्मपरीणाममूपतेरस्य सुन्दर ! । सुरूपाः पड्जन्मानो जगत्त्रितय
विश्रुताः ॥ २९१ ॥ निकृष्टः प्रथमस्तेषु ततोऽधमविमध्यमौ । मध्यमश्चोत्तमश्चैव वरिष्ठश्चेति नामतः ॥ २९२ ॥
तेषां कर्म्मपरीणामं समभ्यर्थ्य कथञ्चन । एकैकं वत्सरं राज्यं दापयिष्याम्यहं क्रमात् ॥२९३॥ षण्णामप्यथ राज्यानां
तेषां वीक्षणहेतवे । प्रेष्यो वितर्कनामायमास्मीयोऽनुचरस्त्वया ॥२९४॥ विज्ञातेषु ततस्तेषु षट्सु राज्येषु तन्मुखात् ।
पृथोऽपमर्दः सर्वोऽपि प्रतीतस्ते भविष्यति ॥ २९५ ॥ अप्रबुद्धोऽथ तद्वाक्यं तथेति प्रत्यपद्यत । विश्वे सर्वमप्यास्थ
सिद्धान्तोऽपि यथोदितम् ॥ २९६ ॥ अप्रबुद्धगिरा वीक्ष्य वितर्कोऽथ समाययौ । तन्मनुष्यजनं माभिकर्षे वर्षेण
दृके प्रतिलक्षिते ॥ २९७ ॥ अप्रबुद्धं प्रणम्याथ स प्रोचे रचिताञ्जलिः । इतस्तावदहं देव ! राज्ये तत्रान्तरेऽगमम्
॥ २९८ ॥ तं मनुष्यमथावेदनास्यपरिडिम्बिमताडनात् । अभीयं घेवघुष्यमाणं तत्र पुरादिषु ॥ २९९ ॥ निकृष्टो
वर्षते राजा प्राकप्रवादेण हे जनाः ! । समाचरत कृत्यानि यथा पिवत खादत ॥ ३०० ॥ ततस्तां घोषणां श्रुत्वा
तत्र सर्वेऽपि ते जनाः । कीदृक् स्यादेष राजेति चिन्तया उत्सुकस्तराम् ॥ ३०१ ॥ ते च सर्वेऽपि संभूय परटा
निवर्संसदि । महामोहादयो देव ! पर्यालोचमिति व्यधुः ॥ ३०२ ॥ विषयाभिलाषमन्त्री महामोहमदोऽब्रवत् ।

१ च नि॰ प्र॰ ।

निकृष्टेऽत्र नृपे जाते वृथैव वयमाकुलाः ॥३०३॥ यत्कर्म्मपरिणामेन निकृष्टस्तादृगेव सः। जनितो यादृशोऽस्माकं
वशवर्त्ती भुजिष्यवत् ॥३०४॥ तत्कर्म्मपरिणामेन चेत्तस्मै विनियोजितम्। इदं राज्यं ततो देव! वयमेवात्र नायकाः
॥ ३०५ ॥ लब्धे निष्कण्टके राज्ये तदेवं देव! संप्रति। हर्षस्थाने किमस्माभिरातुरैर्वत भूयते ? ॥ ३०६ ॥
निकृष्टो जनितः कर्म्मपरिणामेन कीदृशः ?। महामोहेनेति पृष्टो मन्त्री प्रोचे निशम्यताम् ॥ ३०७ ॥
कुरूपो दुर्भगः क्रूरः परलोकपराङ्मुखः। धर्म्मार्थकाममोक्षैश्च दूरतः परिवर्जितः ॥ ३०८ ॥ देवतागुरु-
विद्वेषी दोषैरन्यैरपि श्रितः। गाम्भीर्यौदार्यधैर्यादिगुणनाम्नोऽपि दूरगः ॥ ३०९ ॥ युग्मम् ॥ न वेत्ति च
वराकोऽसौ निजं राज्यं न वा बलम्। न समृद्धिं न वा मूढः स्वरूपमपि तत्त्वतः ॥ ३१० ॥ न चास्मानेष
जानाति चरटान् राज्यहारकान्। प्रत्युत स्वामिभूतांश्च बन्धुभूतांश्च मन्यते ॥ ३११ ॥ स ईदृशो महाराज्ये लब्धेऽ-
प्यत्राधमाधमः। निःशेषशक्तिशून्यात्मा किमस्माकं करिष्यति ? ॥ ३१२ ॥ तदेवं संस्थिते देव! विहायाकुलतां
हृदि। महावर्द्धनकं कर्तुं युज्यते निजनीवृति ॥ ३१३ ॥ तच्छ्रुत्वाथ महामोहो निजराज्ये व्यधापयत्। महावर्द्धनकं
हृष्टः सर्वतस्करतोषकृत् ॥ ३१४ ॥ इतश्चारित्रधर्म्माद्याः श्रुत्वा तां राज्यघोषणाम्। कीदृक् स्यादेष राजेति मन्त्रं
संभूय चक्रिरे ॥ ३१५ ॥ सद्बोधः प्राह चारित्रधर्म्मं विज्ञातमेव ते। निकृष्टस्यास्य यद्रूपमेकान्तेन दुरात्मनः
॥ ३१६ ॥ नास्माकं न[1] च राज्यस्य नामाप्यस्यैष बुध्यते। मित्रीयति महामोहप्रभृतींस्तु रिपूनपि ॥ ३१७ ॥

---

१ निजराज्यस्य ग०।

निकृष्टराज्य वदेव ! सर्वदेवदोषतः । अद्ये सद्यमस्माकं युगापत्तौ सुपस्थितः ॥ ३१८ ॥ एकः तावत्परामृता महामोहादिभिर्वयम् । द्वितीयमीदृशो राजा धिग् दैवमसमञ्जसम् ॥ ३१९ ॥ तत्समाकर्ण्य चारित्रधर्म्मीयाः पृथिवीश्वरः । चक्रिरे सहसा ते च शोकम्लानमुखाम्बुजाः ॥ ३२० ॥ चारित्रधर्म्मवेश्मेऽपि ये जनाः सन्ति तेऽप्यथ । निकृष्टराज्यं विज्ञाय बभूवुः शोकविह्वलाः ॥३२१॥ अथाह चिन्तयामास निकृष्टः क स वर्त्तते ? । एकैः प्रसवितं यस्मात्त्रिजगमपरैः पुनः ॥ ३२२ ॥ यदि चालोकयिष्यामि राज्यार्थं समिहागतम् । तन्मार्गं पेश्यमसौ तदा क्षणम् ॥३२३॥ यावत्स्य निकृष्टस्य तत्र राज्ये प्रवेशनम् । न दधमेव तैर्देव ! महामोहादि तस्करैः ॥ ३२४ ॥ किन्तु चारित्रधर्म्मीयैनस्ता निर्वास्य तं तथा । तद्राज्यमान्तरं विष्वक् स्वीचक्रुः स्वयमेव ते ॥ ३२५ ॥ ततस्तथाकृतं राज्य महामोहादिवेष्टितम् । अगां मनेषु चामषु दिष्टुस्त निकृष्टकम् ॥ ३२६ ॥ निव राज्यपरिभ्रष्टः कुरूपो विमगर्हितः । कुचेलो मलिनः क्रूरः पुरुषार्थविवर्जितः ॥ ३२७ ॥ जन्तुघातककर्म्मार्थे कुर्वन्तु दरपूरणम् । मातङ्गम्लेच्छभिक्षादिरूप नानाविधं भवन् ॥ ३२८ ॥ निधान सर्वदुःखानां पापराशिरिवाकृतान् । दृष्टो मया निकृष्टोऽत्र नृपस्तत्र स पर्यटन् ॥३२९॥ विशेषकम् ॥ किञ्च दुष्पालित राज्य विदधेऽनेन पापिना । इति कर्म्मपरीणामस्तस्योपर्यन्यपराक्रमत् ॥ ३३० ॥ ततस्तं स दृष्टभीत्या दुष्पूरे पापिपञ्जरे । यातनाभिरनेकाभिरपी रयदिति श्रुतम् ॥३३१॥ मयाद्य चिन्तितं देव ! निकृष्टस्यास्य पाप्मनः । अ पद्भूरणमज्ञानविजृम्भितमहो ! महत्

१ पश्यमसौ तदा स० ।

॥ ३३२ ॥ यत्प्रभावान्महाराज्यं हारयित्वैष तन्निजम् । इह तत्र च दुःखौघभाजनं समभूत् परम् ॥ ३३३ ॥ यद्वा तच्चिन्तया किं मे राजादेशो मया परम् । कर्त्तव्योऽतः प्रपश्यामि द्वितीयस्यापि चेष्टितम् ॥ ३३४ ॥ अथाधमस्य तद्राज्यं द्वितीये देव ! वत्सरे । संजज्ञे घोषितं प्रोच्चैः पटहेन च पूर्ववत् ॥ ३३५ ॥ क्षुभिते च जने विष्वग् महामोहनरेश्वरः । सभायां निषसादाथ मन्त्राय सपरिच्छदः ॥ ३३६ ॥ विषयाभिलाषः प्रोचे देवास्मादधमादपि । नैवास्ति भयमस्माकं श्रूयतां यादृगस्त्यसौ ॥ ३३७॥ इहलोकरतो गाढं परलोकपराङ्मुखः । धर्म्ममोक्षकृतद्वेषः कामार्थविहितादरः ॥ ३३८ ॥ वत्सलोऽस्मासु चारित्रधर्म्मादिषु तु मत्सरी । अस्यान्तरङ्गराज्यस्य नामाप्येष न बुध्यते ॥ ३३९ ॥ युग्मम् ॥ तदेतस्यापि यद्राज्यं राज्यमस्माकमेव तत् । किन्त्वेतस्यापि राज्येऽत्र न दातव्यं प्रवेशनम् ॥३४०॥ प्रविष्टो ह्येष जानीयादस्माकमिह चेष्टितम् । किञ्चिन्मात्रं यतो देव ! वीर्यमेतस्य विद्यते ॥३४१॥ बहिष्करणमेवातो युज्यतेऽस्य दुरात्मनः । तदुपायश्च कामार्थप्रतिबद्धो ह्यसौ किल ॥३४२॥ ततः सर्वेऽपि संभूय वयं तं धनकामयोः । आसक्तं बाह्यदेशेषु धारयामो बहिष्कृतम् ॥ ३४३ ॥ भवत्वेवमिति प्रोच्य महामोहादयोऽथ ते । अधमं तं बहिष्कर्तुं त्वरन्ते यावदुन्मदाः ॥३४४॥ सुता तावदमात्यस्य निजसामर्थ्यगर्विता । दृष्टिर्नाम समुत्थाय सप्रगल्भमदोऽवदत् ॥ ३४५ ॥ सोऽधमः कियती मात्रा ? देव ! यं प्रति गामुकाः । यूयं वशीकृताशेषसुरासुरनरेश्वराः ॥ ३४६ ॥ तद्दीयतां ममैवायमादेशो येन तं जवात् । एकाप्यहं करोम्येषा व्रजित्वा परवर्त्तिनम् ॥ ३४७ ॥ किञ्च मे प्रसरो यत्र तत्रैते मत्सहोदराः । स्पर्शनाद्या भवन्तश्च गवेयुर्भवितोऽन्तिके ॥ ३४८ ॥ एव-

…कपता माथ महामोहमहीभुजा । विसृष्टा प्रययौ तत्र यत्रास्ते सोऽधमो नृपः ॥ ३४९ ॥ ते च चारित्रधर्मीयाः पूर्वमस्तोकसंकुलाः । चमूपुरधमस्यापि राज्यं कुस्वामिमागतः ॥ ३५० ॥ दृष्टिस्तु योगिनी कृत्वान्तर्दर्शनमथ माश्रिणी । भेजे स चमूपलावापूर रूपालोकनलोलुभः ॥ ३५१ ॥ नारीमद्भुतसौन्दर्यां तद्विलासांश्च हारिणः । चित्राण्यन्यच्च चक्षुष्यं स पेशलमेव तृप्यति ॥३५२॥ एवं रात्रिंदिवं रूपदर्शनाक्षिप्तमानसः । सोऽन्यत्किंचिन्न जानाति पराक्रमे हितमात्मनः ॥ ३५३ । यथा च वर्तमानस्य तस्य तैः स्पर्शनादिभिः । महामोहादिभिश्चैष स्व स्व वीर्यमदर्शयत ॥ ३५४ ॥ ततस्तैर्लुप्तसंज्ञानः प्रसक्तो धनकामयोः । वशिमके बलादेव । सोऽधमो निजराज्यतः ॥ ३५५ ॥ चारित्रधर्ममुख्यास्तान्निर्निर्वास्य स्वयं पुनः । तद्राज्यमुररीचक्रुः सर्वतस्ते निरङ्कुशाः ॥ ३५६ ॥ भ्रष्टराज्यप्रतापोऽपि परिभूतोऽपि चारिभिः । मन्यते परमं सौख्यमात्मनः सोऽधमः पुनः ॥ ३५७॥ एवकभटवैन्यादि रूपं नानाविधं पश्यन् । दूषयन् धार्मिकं लोकं प्रहसन् मोगिलं पुनः ॥ ३५८ ॥ चारुरूपेक्षणक्षः प्रद्युम्नपुम्नतस्पटः । बहिरङ्गेषु देशेषु भ्राम्यन् कालं निनाय सः ॥ ३५९ ॥ युग्मम् ॥ अन्येद्युः क्वापि मातङ्गी रूपयौवनशालिनी । दृष्टा तेन भेजे च तद्रूपाकृष्टचेतसा ॥ ३६० ॥ ततस्तं त्यक्तमर्यादं दुराचारं स्ववेश्मतः । बहिरङ्गा अपि जनाः क्रोशन्तो निरवासयन् ॥ ३६१ ॥ क्लेशयित्वा बहिर्लोके चिरं समधम ततः । निन्ये कर्मपरीणामो दुष्पुर पापिपञ्जरं ॥ ३६२ ॥ रौन्यचुम्बासकस्तेन रोपपेन निकृष्टवत् । विविधं बाध्यते सोऽपि तत्रोचैरिति च श्रुतम्

१ मूपा॰ क॰ ग॰ प॰ । २ पक्षमेव प॰ । ३ चन्या॰ स॰ प॰ । ४ राज्ये कु॰ ता॰ क॰ प॰ ।

॥ ३६३ ॥ मयाथ चिन्तितं देव ! यदेषोऽपीह तत्र च । दुःखभागभवत् तत्राज्ञानमेव निबन्धनम् ॥ ३६४ ॥ संवत्सरे तृतीयेऽथ जज्ञे राजा विमध्यमः । घोषणादौ कृते मन्त्री महामोहमुवाच च ॥ ३६५ ॥ वत्सलोऽस्मासु देवायमपि राजा विमध्यमः । किन्तु चारित्रधर्माद्यांस्तानप्ययमपेक्षते[1] ॥ ३६६ ॥ अत एव यथामुष्य सर्वदा धनकामयोः । प्रतिबद्धं मनो देव ! तथा धर्मेऽपि किञ्चन ॥ ३६७ ॥ देवानां चैष[2] सर्वेषां सर्वेषां च तपस्विनाम् । धर्म्माणामपि सर्वेषां स्तोता मध्यस्थमानसः ॥ ३६८ ॥ तदेवं मन्यते बन्धूभूतानस्मानयं यथा । तथा चारित्रधर्म्माद्यानपि जानाति किञ्चन ॥ ३६९ ॥ प्रवेशोऽस्यापि तद्राज्ये न देयोऽत्र यतो भवेत् । प्रविष्टोऽयं स्वसैन्यस्य पालकोऽस्मद्विबाधया ॥ ३७० ॥ बहिर्भूतस्तु यद्येष स्वसैन्यपरिपालनम् । कुर्यात् तथापि नास्माकं भवेदत्यन्तबाधकः ॥ ३७१ ॥ ततो दृष्टिं पुरस्कृत्य सत्वरं पृथिवीपतिः । एषोऽप्यधमवद्देव ! राज्यतः क्रियते बहिः ॥ ३७२ ॥ भवत्वेवमिति प्रोक्ते महामोहमहीभुजा । बहिश्चक्रे स तैश्चौरै राज्याद् दृष्टिपुरस्सरैः ॥ ३७३ ॥ वशीकृतं च तद्राज्यं किन्तु नात्यन्तपीडितम् । चारित्रधर्म्मसैन्यं च मनागेतैरुपेक्षितम् ॥ ३७४ ॥ तस्माद्राज्याद्बहिःस्थोऽपि स तु राजा विमध्यमः । नित्यं धर्म्मार्थकामेषु यथाकालं प्रवर्त्तते ॥ ३७५ ॥ क्षत्रियब्राह्मणादीनामाकारं देव ! बिभ्रता । तेऽपि चारित्रधर्माद्यास्तेनैवं प्रीणिता मनाक् ॥ ३७६ ॥ तथा च वर्त्तमानोऽयं श्लाघां बाह्यजनेष्वपि । प्राप कर्म्मपरीणामस्तुतोष च मनाग् नृपः ॥ ३७७ ॥ ततस्तं मानवा-

१ °क्ष्यते क० ख० ग० । २ °व स० ता० ।

षामहन्येषु द्युतवहइषु । अनैपीमगरथ्येष मयस्याकम्पित सदा ॥ २७८ ॥ मध्यमऽथ नृपे जाते तुर्येऽब्दे घोषणा
दिक्षम् । पमून पूर्ववत् यावरस मन्त्री नृपमाह तम् ॥ २७९ ॥ देवास्माकमयं नैष सुन्दरो मध्यमो नृपः ।
तेनास्मद्विद्विषा यस्य सिद्धान्तेनास्ति सङ्गमः ॥२८०॥ ततस्तत्कथनात् किञ्चित् स्वरूप वेत्त्यसौ नृपः । स्वराज्य
स्यास्य चारित्रधर्म्माद्दीनो च नस्तथा ॥ २८१ ॥ अत एवैष निःशेषक्लेशराशिनिशुम्भनम् । तत्त्वतो मन्यते मोक्ष
धर्म्मं चेतस्य साधकम् ॥ २८२ ॥ उदारसत्त्वविरहात् केवलं स्वक्रमक्षमः । कामार्थो सेवते नित्यमेष तदोपवेयपि
॥ २८३ ॥ तदस्यावहितैर्देव । भाव्यमस्माभिरन्वहम् । नो चेन्निरस्य नः सर्वाभिवराज्य प्रदीप्यति ॥ २८४ ॥
निशम्य तदमात्योक्त महामोहादयोऽथ ते । पमूवुर्मध्यमे राज्ये किञ्चिच्चकितचेतसः ॥ २८५ ॥ ते तु स्वोकी
मनल्लोकाः कोका इव दिनोदये । चारित्रधर्म्मराजाद्याः प्रापुरीषत्तरां सुखम् ॥ २८६ ॥ मध्यमस्तु महामोहादीन्
द्विस्त्रोथ पोषयन् । चारित्रधर्म्माद्दीन् राज्य किपदप्पादवे निजम् ॥ २८७ ॥ श्रावकाणां दयद्रूपं भूयसां
जिनशासने । स प्राप परमां श्लाघां बहिरङ्गजनेष्वपि ॥ २८८ ॥ ततः कर्म्मपरीणामस्तत्पिता विशुधालये ।
पुरे तं नीतवान् हर्षाद्दिति चाकर्णितं मया ॥ २८९ ॥ पञ्चमे हायनेऽथामूदुत्तमः पृथिवीपतिः । घोषणायां
च मातापां परितमुषुसर्जनाः ॥ २९० ॥ संधीरणाय लोकानां निजानामथ तोपमाक्ष । चारित्रधर्म्मराजेन्द्र
सद्बोधः प्राह पर्षदि ॥ २९१ ॥ चिरात्मः फलितं देव । भाग्यैरद्य यदुत्तमः । बभूव भूमिपालोऽयं सर्वाद्भुतगुणास्पदम्
॥२९२॥ स्वराज्यमिदमस्माभि महामोहादयीम तान् । नामतो गुणतश्चापि सर्वं जानात्यसौ यतः ॥२९३॥ संसारा

मन्यते धर्म्ममेवैकं तत्त्वं मोक्षैकमानसः ॥ ३९४ ॥ ततोऽयं पोपयन्नस्मान्निरस्य-
द्विरतश्चायमर्थकामपराङ्मुखः । मन्यते धर्म्ममेवैकं तत्त्वं मोक्षैकमानसः ॥ ३९५ ॥ तदस्य यदिदं राज्यं तद्राज्यं
स्त्वांस्तु तस्करान् । पालयिष्यत्यदः सम्यग् निजराज्यं महामनाः ॥ ३९६ ॥ महामोहादयस्ते तु श्रुत्वा राज्यं तदौत्तमम् ।
तत्त्वतोऽस्ति नः । कार्यतामुत्सवस्तस्माद्विदधे तत्तथा नृपः ॥ ३९६ ॥ महामोहादयस्ते तु श्रुत्वा राज्यं तदौत्तमम् । राज्यं पृष्टः स
प्रलीना वयमित्युच्चैर्मुक्तप्राणा इवाभवन् ॥ ३९७ ॥ इतः कर्म्मपरीणामात् पितुः प्राप्योत्तमेन तत् । राज्यं पृष्टः स
सिद्धान्तः स्थितिं राज्यस्य तद्यथा ॥३९८॥ कथमत्र प्रवेष्टव्यं ? हन्तव्याश्चरटाः कथम् ? । कथं चैतद्वशे कार्यं ? क
नियोज्यं च पौरुषम् ? ॥ ३९९ ॥ सिद्धान्तः प्राह राज्येऽत्रान्तरे प्रविशता त्वया । कार्यं गुरुवचो भक्त्या पाल्या
पञ्चमहाव्रती ॥ ४०० ॥ यतिवेषेण निःसङ्गेन चानियतवासिना । भाव्यं शब्दादिषु तथा रागद्वेषविवर्जिना
॥४०१॥ परात्मनि मनो न्यस्यं मान्याः समितिगुप्तयः । परीषहोपसर्गाश्च सोढव्या धीरचेतसा ॥४०२॥ ततश्चा-
भ्यासवैराग्याद्वसहायवता त्वया । निहन्तव्या यथादर्शं महामोहादयो द्विषः ॥ ४०३ ॥ पोषणीयं च चारित्रधर्म्म-
सैन्यं ततस्त्वया । राज्ये तत्र प्रवेष्टव्यं पूर्वद्वारेण सुन्दर ! ॥ ४०४ ॥ वामे तस्य च दिग्भागे महामोहादयो द्विषः ।
सर्वाधारा पुनस्तेषां चित्तवृत्तिमहाटवी ॥ ४०५ ॥ पश्चिमे तामतिक्रम्य
चारित्रधर्म्मराजाद्या विद्यन्ते दक्षिणे पुनः ॥ ४०५ ॥ सर्वाधारा पुनस्तेषां चित्तवृत्तिमहाटवी । पश्चिमे तामतिक्रम्य
भागे पुर्यस्ति निर्वृतिः ॥ ४०६ ॥ इतश्च तत्र यातस्य तव वत्स ! भविष्यति । पालितस्यास्य राज्यस्य परिपूर्णं
फलं ध्रुवम् ॥ ४०७ ॥ तस्यां च प्रेप्सुना सेव्यस्त्वयौदासीन्यनामकः । राजाध्वा ममतायोगनलिकादत्तदृष्टिना
॥ ४०८ ॥ तत्रास्पृष्टे महामोहादिभिस्ते व्रजतः सतः । आदावेवाप्यवसायाभिधानोऽस्ति महाह्रदः ॥ ४०९ ॥

पुष्णाति स महामोहसैन्यं परेण कश्मलः । प्रमादितस्तु चारित्रधर्म्मसैन्यं समागतः ॥ ४१० ॥ ततश्च कार्ये
यो यत्र कुशलस्तत्र तं सुधीः । नियुञ्जीतेति भवता तं प्रसादयितु मिदम् ॥ ४११ ॥ चतस्रोऽपि महादेव्यो
नियोज्यास्तत्र कर्म्मठाः । उपेक्षाकरुणामैत्रीमुदितास्या नरोत्तम ! ॥ ४१२ ॥ युग्मम् ॥ अप्रमत्तत्वं कूटाचलस्मात्
चारणा नामतो नदी । सा च स्थिरासनस्थेन निरुध्य श्वाससंचयम् ॥ ४१३ ॥ जितेन्द्रियेण च प्राप्या
त्वया यत्नेन तत्र च । विकल्पवीचयः प्रेर्या महामोहादिनिर्मिताः ॥ ४१४ ॥ युग्मम् ॥ द्रक्ष्यसि त्वं ततो
धर्म्मध्यानदम्भोलकं पुरः । स च सबीजयोगाख्ये महामार्गे पतिष्यति ॥ ४१५ ॥ तेन ते मच्छतचाशु
महामोहादिशत्रुषु । क्षीणप्रायेषु तद्ग्रामेपूच्छलितेषु च ॥ ४१६ ॥ चारित्रधर्मसैन्ये च प्रबलत्वमुपेयुषि ।
धारयिष्यति शुक्लस्य राज्यमूर्त्तिरमस्तमाः ॥ ४१७ ॥ युग्मम् ॥ ततस्त्वं लप्स्यसे शुक्लध्यानदम्भोलकं
पुरः । भविता केवलालोकस्तेन ते गच्छतः सतः ॥ ४१८ ॥ स च दम्भोलको गत्वाऽश्वमेव मिलि
ष्यति । मार्गे प्रवृत्ति निर्बीजयोगनामनि निर्मले ॥ ४१९ ॥ तत्रस्थेन समीक्ष्यं भवता विपमानरीन् । केवलि
समुद्घाताख्यः प्रयत्नः कार्य एव हि ॥ ४२० ॥ हन्तव्यास्त्रयो दुष्टवेताला योगनामकाः । ततः परं च
भविता शैलेशी नाम वर्त्तनी ॥ ४२१ ॥ तया मनाग्वजन् तां पुरीं प्राप्स्यसि निर्वृतिम् । ततोऽनन्तकालान्यस्य
फलमुत्तमं ! मोक्ष्यसे ॥ ४२२ ॥ चारित्रधर्म्मराजाद्या ये तु त्वदनुजीविनः । तत्र त्वासुपतां सर्वे तेऽपि यास्यन्त्य-
भेदतः ॥ ४२३ ॥ तद् गच्छ वत्स ! सिद्धिस्त्वे कुरु राज्यं मनोहरम् । त्वया राज्यफले प्राप्ते सफलो मे परिश्रमः

॥ ४२४ ॥ तथेति प्रतिपद्याथ हृष्टः सिद्धान्तशासनम् । तथैव विदधे सर्वं तदुत्तममहीपतिः ॥ ४२५ ॥
यावज्जित्वा महामोहादिकान् दृष्टिं च तामयम् । तां पुरीं निर्वृतिं प्राप जन्मादिक्लेशवर्जिताम् ॥ ४२६ ॥
यो राज्यदाताऽऽसीत्कर्म्मपरिणामः पितास्य च । तस्यापि कृतकृत्योऽयं न ढौकं तत्र यच्छति ॥ ४२७ ॥
जज्ञेऽथ वत्सरे षष्ठे वरिष्ठो नाम भूपतिः । घोषणायां च जातायां पूर्ववच्चुक्षुभुर्जनाः ॥ ४२८ ॥ मुदं चारित्र-
धर्म्माद्याः प्रापुर्जातेऽत्र राजनि । महामोहादयस्ते तु मुमूर्षव इवाभवन् ॥ ४२९ ॥ यश्चोत्तमस्य संपन्नो वृत्तान्तो
राज्यसाधने । स एवापि वरिष्ठस्य विशेषस्तु निगद्यते ॥ ४३० ॥ सिद्धान्तवचनात् कृत्यं ज्ञातवानुत्तमः किल ।
वरिष्ठोऽयं पुनः सर्वं स्वयमेव विवेद तत् ॥ ४३१ ॥ निजज्ञानबलेनैव राज्यं पालयतस्ततः । बहिरङ्गा महात्मानो
जातास्तस्य पदातयः ॥ ४३२ ॥ बहिरङ्गपदातीनां धारयन्ति यतो गणम् । ततस्ते विश्रुता लोके नाम्नेति गण-
धारिणः ॥ ४३३ ॥ ततस्तेन वरिष्ठेन तैरात्मगणधारिभिः । उपकारीति विज्ञाय स सिद्धान्तो निरूपितः ॥ ४३४ ॥
राजादेशेनोपलभ्य सिद्धान्तं तेऽपि तं जवात् । अङ्गोपाङ्गादिसंस्कारान्ससज्जुः शुद्धबुद्धयः ॥ ४३५ ॥ ततोऽसौ
नित्यरूपोऽपि सिद्धान्तः परमार्थतः । कारितोऽयं वरिष्ठेन ख्यातिमेवं जने ययौ ॥ ४३६ ॥ किञ्चास्य कुर्वतो
राज्यं महात्मैकशिरोमणेः । चतुस्त्रिंशदतिशया बभूवुर्भुवनाद्भुताः ॥ ४३७ ॥ अम्भोजसुरभिः श्वासो वपुर्नीरोग-
निर्म्मलम् । अदृश्याहारनिहारौ धवले मांसशोणिते ॥ ४३८ ॥ क्षेत्रे योजनमात्रेऽपि कोटिकोटिजनस्थितिः ।
सर्वभाषानुगा वाणी पृष्ठे भामण्डलं वरम् ॥ ४३९ ॥ सपादे योजनशते न रुग् न स्वान्यचक्रभीः । न वैरमारि-

दुर्भिक्षादिवर्षाविषयपि ॥ ४४० ॥ चामराः सिंहपीठं च छत्रत्रितयमुज्ज्वलम् । रत्नध्वजो धर्मचक्रं चप्रत्रितय मुच्चकैः ॥ ४४१ ॥ संचारिनवपद्मानि क्लेशच्छिमतुरङ्गता । अनुकूलोऽनिलो पथानर्दिर्दुन्दुभिनिस्वनः ॥ ४४२ ॥ पुष्पवृष्टिः सुग धाम्बुवृष्टिर्न्यस्तसकण्टकाः । कणशमश्रुनखावृद्धिः शकुनाम प्रदक्षिणाः ॥ ४४३ ॥ जघन्यतोऽपि देवानां कोटिर्निकटवर्तिनी । ऋतूनामिन्द्रियार्थानामानुकूल्यममी च ते ॥ ४४४ ॥ सप्तभिः कुलकम् ॥ एतैश्चा तिशयैर्युक्तो विश्वविवेकपरस्सलः । प्रतिपक्षपरेभ्योऽपि स निर्वृतिपथं निजम् ॥४४५॥ स्वा(सा°)रमीमाषपरिमिता रमीयान्तरमहावलः । वरिष्ठः स नृपप्रष्ठश्चिरं राज्यमपालयत् ॥ ४४६ ॥ युग्मम् ॥ सर्वानपि महामोहादीनभिहत्याथ वैरिणः । तेनैव वर्त्मना प्राप निर्वृतो स महीपतिः ॥ ४४७ । तदेव भवतादेशात्तेषां षण्णामपि प्रभो ! । राज्यानि प्रविलोक्याहमायातस्तव सन्निधौ ॥ ४४८ ॥ अप्रबुद्धो वितर्कस्य श्रुत्वा सदिय भाषितम् । प्रचिन्तयदहो ! सर्वं तथैव तत्सममनु ॥ ४४९ ॥ किंत्वेकमपि तद्राज्यं कारणं सुखदुःखयोः । मयेत्पालनमाभित्सेस्यावयो पदू गुरु मेम ॥ ४५० ॥ यतो निकृष्टमुख्यानां तेषां षण्णां महीभुजाम् । भिन्न फलमभूद्राज्यं श्रापाप्राप्तविभेदतः ॥ ४५१ ॥ एतद्वार्षिकराज्यानां पद्रूक फलपता मया । सर्वमेव च विज्ञात यतः प्रोक्त मनीषिभिः ॥ ४५२ ॥ येन संवत्सरो दृष्टः सकृत्कामश्च सेवितः । तेन सर्वमिव दृष्ट पुनरावर्तकं जगत् ॥ ४५३ ॥ तत्सिद्धान्तप्रसादेन विज्ञाय सुखदुःखयोः । हेतुं स्वातः प्रबुद्धोऽभूर्विनष्टैनाप्रबुद्धता ॥ ४५४ ॥ एव च परितुष्टा

१ कश्चिद्वि ता० क० स० प०। २ स्वामी° म०। ३ °ताम् निहत्यान स्ववैरिणः स०। ४ °नष्टा वाम स०, °नष्टा° म०।

त्मा स प्रबुद्धो महामनाः। तद्राज्यषट्कं निश्चित्य ज्ञानाज्ञातो निरातुरः ॥ ४५५ ॥ दृष्टिकथानकम् ॥ प्रसङ्गात्सर्वमेतच्च तुभ्यं हरिनरेश्वर!। निवेदितं मया योऽर्थः प्रस्तुतः स निशम्यताम् ॥ ४५६ ॥ तस्याघमस्य भूभर्तुर्महामोहादिशत्रवः। सा च दृष्टिर्विशेषेण यथा दोषाय जज्ञिरे ॥ ४५७ ॥ तथान्येऽप्यान्तरा लोका दुष्टा दोषाय निश्चितम्। अज्ञानध्वान्तलीढानां जायन्ते भवचारिणाम् ॥ ४५८ ॥ ततः[2] सोऽपि वराको यत् क्लेश्यते धनशेखरः। ताभ्यामान्तरमित्राभ्यां पापाभ्यां तत्र कौतुकम् ॥ ४५९ ॥ हरिराहोदिताः कर्म्मपरिणामस्य ये सुताः। षडमी तेषु यातेषु परतः किमभूत्प्रभो! ॥ ४६० ॥ किं षडेव हि जातानि तानि राज्यानि नापरम्?। किं वा भवन्ति तादृशि राज्यान्यत्र[3] पुनः पुनः? ॥ ४६१ ॥ सूरिराह महाराज! य एते भुवनोदरे। विद्यन्ते देहिनः केचिन्नानाकाराश्चराचराः। ॥ ४६२ ॥ ते कर्म्मपरिणामस्य नरेन्द्रस्याखिला अपि। विज्ञेयाः षड्विधाकारास्तनयाः परमार्थतः ॥ ४६३ ॥ ततस्तेषु गतेष्वेवं तद्राज्यमपरे सुताः। तादृशा एव भुञ्जन्ति तेन दत्तं पुनः पुनः ॥ ४६४ ॥ यद्वा तिष्ठन्तु दूरेऽन्ये तनयास्तस्य तत्सुतम्। मामेवोत्तममुर्वीश! विद्धि स्वं[4] तु विमध्यमम् ॥ ४६५ ॥ यतः स्वरूपमाख्यायि[5] यत् त्वदग्रे[6] तयोर्मया। दृश्यते मयि तद् व्यक्तमशेषं त्वयि च क्रमात् ॥ ४६६ ॥ हरिः प्रोचेऽथ यद्येवं कृतं वैमध्यमेन मे। राज्येन दाप्यतां मह्यमप्येतद्राज्यमौत्तमम्

१ °त्स्तन्निश° ख०। २ ततः सोऽपि हि सजातः सर्वतो धनशेखरः। पीडितस्ताभ्यामान्तरमित्राभ्यां तत्र कौतुकम्॥ ख० ३ °न्येवं पुनः ग०। ४ त्वां च वि° ख०। ५ °ख्यातं यत् ख०। ६ तयोर्नृपयोर्मया क० ख०, त्वदग्रेऽनयोर्मया ग०।

तया ॥ ४८३ ॥ साह्लादाख्ये पुरे बाह्येऽधुना गम्यं त्वया प्रिय ! । अयं तु पूर्ववद्भावी सुहृत् पुण्योदयस्तत्र ॥४८४॥ स्वीकृत्याथ तदादेशं दत्तान्यगुटिकस्तया । पुण्योदयसमेतोऽहं प्रतस्थे तत्पुरं प्रति ॥ ४८५ ॥ इत्यवेत्य हरिशेखरसूनोर्दुर्विपाकमधमस्य च वृत्तम् । लोभमैथुनविलोक( °च° )नलौल्यं मुञ्चतेच्छत सुखं यदि भव्याः ! ॥ ४८६ ॥

इति श्रीश्रीचन्द्रसूरिशिष्यश्रीदेवेन्द्रसूरिविरचिते उपमितिभवप्रपञ्चाकथासारोद्धारे लोभमैथुनचक्षुरिन्द्रियविपाकवर्णनो नाम षष्ठः प्रस्तावः समाप्तः ।

## सप्तमः प्रस्तावः ।

इतोऽस्ति मनुजगतौ महीमण्डलमण्डनम् । जनताजनिताह्लादं साह्लादं नाम तत्पुरम् ॥ १ ॥ दोषस्तत्रैक एवायं चोरयन्ति यदुद्भटाः[1] । यूनां हृदयसाराणि युवतीजनतस्कराः ॥ २ ॥ तत्राभूद्भूपतिः शूरराजतेजःकृतक्षतिः[2] । अर्थिचातकजीवातुर्जीमूत इति विश्रुतः ॥ ३ ॥ सिक्ता विवेकनीरेण यस्य नीतिलताद्भुता । यशःप्रसूनं सुपुवे वासिताशेषदिङ्मुखम् ॥ ४ ॥ शुद्धपक्षद्वया तस्य लीलागमनशालिनी । हंसीव राजहंसस्य जज्ञे लीलाभिधा प्रिया ॥ ५ ॥ गुटिकायाः प्रयोगेण साथ मां भवितव्यता । तस्याः कुक्षौ प्रचिक्षेप क्षणादेव मृगेक्षणे ! ॥ ६ ॥ संपूर्णे

१ °वः क० ख० । २ °क्षितिः क० ख० ग० घ० ।

समये सापि मां पुण्योदयसंयुतम् । नन्दनं जनयामास मलयोर्वीव चन्दनम् ॥ ७ ॥ जन्मोत्सवं विधायाथ पितरौ
हृष्टमानसौ । धनवाहन इत्याख्यां चक्रतुः समये मम ॥ ८ ॥ इतोऽस्ति मत्पितुर्भ्राता कनिष्ठो नीरवाभिधः ।
देवी पद्माभिधा तस्याकलङ्काख्यस्तयोः सुतः ॥ ९ ॥ ततोऽहममुना सार्धमधीत्य सकलाः कलाः । क्रमादवाप
तारुण्यममूर्तं मूर्तिभूषणम् ॥ १० ॥ स चाकलङ्कः संवेगे चारपाद्म्यमलाशयः । सुसाधुदेशनाश्रुत्या कुशलो
जिनशासने ॥ ११ ॥ अथ क्रीडितुमन्येद्युरुद्याने सुधनन्दने । गतावावामपश्याव सुन्दरं जिनमन्दिरम् ॥ १२ ॥
नत्वा तत्राथ तीर्थेशं पावदावां विनिर्गतौ । साधवः सुन्दराकाराः केचिदावामुपाययुः ॥ १३ ॥ ते च तत्राष्टमीं
मत्वा नत्वा जिनमुपोषिताः । सिद्धान्तं गुणयन्ति स्म परिभूत्वा पृथक् पृथक् ॥ १४ ॥ तद्दर्शनसमुद्भूतहर्षोत्कर्षो
मया सह । अकलङ्को जगामाथ साधोरेकस्य सन्निधौ ॥ १५ ॥ नत्वोपविश्य तेनाथ पृष्टो वैराग्यकारणम् ।
स साधुरभ्यधादेवं महाशय ! निशम्यताम् ॥ १६ ॥ ग्रामे लोकोदरे नाम वास्तव्योऽहं कुटुम्बिकः । लग्नं
प्रदीपनं विष्वग् रात्रौ तत्र च भैरवम् ॥ १७ ॥ धूमज्वालाकलापाढ्यं वंशस्फोटरवाकुलम् । लोककोलाहलाकीर्णं
तच्च वातेन वर्धते ॥ १८ ॥ क्रन्दन्त्यर्भाः स्त्रियो धावन्त्यारटन्त्यन्यपक्षिणः । पिङ्गाः किलकिलायन्ते मुष्णन्ति च
मलिम्लुचाः ॥ १९ ॥ सर्वस्वानि च दहन्ते शोचन्ति कृपणास्तथा । अमूदमातापुत्रीयमित्युच्चैस्तारमदीपनम्
॥ २० ॥ युग्मम् ॥ विबुद्धः कोऽपि गोचन्द्रे ग्रामसम्परिस्थिते ततः । कोऽप्यारभमकथम् मन्त्रवादी मण्डलमालिखत्

१ °क्लिकि° ता० । २ °ख्यास° क० ख० ग० ।

॥ २१ ॥ तेनाहूतास्ततः केचिदल्पास्तत्राययुर्जनाः । प्रदीपनकनिष्काशाज्जाताश्च सुखभाजिनः ॥ २२ ॥ ग्रहग्रस्ता इवान्ये तु मूढास्तत्र प्रदीपने । क्षिपन्ति तत्प्रशान्त्यर्थं तृणकाष्ठघृतादिकम् ॥ २३ ॥ मण्डलस्थैर्जनैस्तैश्च वारिता बहुधापि ते । न तिष्ठन्त्युपहासादि तेषां प्रत्युत कुर्वते ॥ २४ ॥ विदधत्यपि तद्वाक्यं पुण्यभाजस्तु केचन । भवितव्यतया भातं वचस्तेषां ममाप्यथ ॥ २५ ॥ उत्प्लुत्य मण्डले तत्र गतेनाथ मयेक्षिताः । रटन्तो दह्यमानास्ते ग्राम्यलोकाः समन्ततः ॥ २६ ॥ मण्डलस्था जनास्ते तु कियन्तो व्रतिनस्ततः । तेषु व्रत्यहमप्येतत् तन्मे वैराग्यकारणम् ॥ २७ ॥ तदाकर्ण्य प्रहृष्टोऽथ द्वितीयमुनिसंमुखम् । प्रस्थितः स मया भद्रे ! जगदे नीरदात्मजः ॥ २८ ॥ किं साधुनाऽमुनाऽऽख्यातं भ्रातर्वैराग्यकारणम् ? । मुदितस्त्वमभूरेवं यच्छ्रुत्वा सोऽप्यथावदत् ॥ २९ ॥ भ्रातर्लोकोदरो ग्रामो निवासस्थानमात्मनः । मुनिना यः समाख्यातः स संसारः प्रतीयताम् ॥ ३० ॥ रागद्वेषाग्निना तत्र मोहरात्रौ प्रदीपनम् । धूमोऽत्र तामसो भावो ज्वालाटोपस्तु राजसः ॥ ३१ ॥ कलिर्वंशभिदारावो लोककोलाहलेसदृक् । अशुद्धाध्यवसायश्च पवनः प्रेरको मतः ॥३२॥ कषायाः शिशवो ज्ञेया दुष्टलेश्याश्च योषितः । अन्धा मूर्खा जनाः प्रोक्ताः क्रियाहीनास्तु पङ्गवः ॥३३॥ पिङ्गास्तु नास्तिकाः ख्याता इन्द्रियाणि च तस्कराः । तथात्मगेहसाराणि सर्वस्वानि मतान्यहो ! ॥ ३४ ॥ हीनसत्त्वास्तु कृपणास्त्राताऽत्र च परस्परम् । न कोऽप्यस्तीदमाख्यातममातापुत्रकं ततः ॥ ३५ ॥ मन्त्रवाद्यत्र बोद्धव्यः स्वयम्बुद्धो जिनेश्वरः ।

१ °तन्मम वै° ख० । २ °लः स° ता० क० ग० घ० ।

तीर्थमण्डलकन्मध्यलोके गोचन्द्रकोपमे ॥ ३६ ॥ इत्यारभक्षपेनैव प्रश्नमन्त्रस्य रेखया । आह्वानं जीवलोकानां धर्मदेशनया कृतम् ॥ ३७ ॥ ततस्तत्राऽऽययुः केऽपि भव्या आवाय निर्वृताः । स्तोकास्ते किन्तु यन्मार्गेऽनन्ते ते भवचारिणाम् ॥ ३८ ॥ कषायान् विषयांश्चैव विपर्यस्तधियोऽपरे । घृतकुम्भे घनप्रख्यांस्तच्छमाय प्रयुञ्जते ॥ ३९ ॥ विषमस्तुपहासादि तीर्थस्यैर्मोरिताश्च ते । केचिदेव वचस्तेषां कुर्वन्त्येव मुनिर्यथा ॥ ४० ॥ तीर्थेऽत्र च प्रचिन्तेनामुना संसारचारिणः । दह्यमाना जना दृष्टा रागद्वेषप्रदीपने ॥४१॥ भावकृत्याविकासाशुभाभ्यां भेदाच्चतुर्विधाः । तीर्थस्यास्ते च तन्मध्ये प्रव्रज्यैषोऽप्यभूद् यती ॥ ४२ ॥ ततः प्रदीपनमिदं स्वस्य वैराग्यकारणम् । मुनिनाऽल्पापि तथार्हं पुपुषे मुदितस्ततः ॥ ४३ ॥ प्रदीपनकमेतच्च सर्वसाधारणं मतम् । आवयोरपि तज्ज्ञातः । स्यात्तु नेवात्र युज्यते ॥ ४४ ॥ मयि तूष्णींस्थिते पापे । सोऽथ नीरदनन्दनः । गत्वा द्वितीयमप्राक्षीन्मुनिं वैराग्यकारणम् ॥४५॥ शशंसाथ मुनिर्लोकाकाशभूमिप्रतिष्ठितम् । अस्त्यापानकमस्तोकमद्यपालकसंकुलम् ॥ ४६ ॥ भूरिमधासवसुरासुरकापूर्णभाजनम् । नीलनीरजसंच्छन्नानाचषकसङ्कुलम् ॥ ४७ ॥ मृदङ्गकंसीकतालवंशवीणारवाकुलम् । पिशाचहासमृत्यावेर्मोवैर्बहुविधैर्युतम् ॥ ४८ ॥ विशेषकम् ॥ जनास्तत्र च ते मद्यपायिनो मदघूर्णिताः । दशामनुभवन्त्युच्चैः शोचनीयां सचेतसाम् ॥ ४९ ॥ यतोऽत्र मद्यपाः सर्वक्रियाशून्या मृता इव । एकेऽप्यचारिवनस्पतिवत् सन्त्यनन्तकाः ॥ ५० ॥ अपरे संव्यवहारिवनस्पतिनिभाः पुनः । अनन्ता एव पिबन्ते व्यवहारकुपो

१ 'हारय' क० ख० ग० ।

मनाक् ॥५१॥ अन्ये पुनरसंख्याताः पृथ्व्यम्बुशिखिवायुवत् । विद्यन्ते तादृशा एव मद्यपा मदविह्वलाः ॥५२॥ द्वित्रीन्द्रियका इवासंख्या आरटन्तः परे पुनः । न जिघ्रन्ति न पश्यन्ति नापि शृण्वन्ति किञ्चन ॥ ५३ ॥ अन्ये तु मद्यदोषेणासंख्यास्त्रिकरणा इव । जिघ्रन्ति किञ्चिन्न पुनः पश्यन्त्याकर्णयन्ति वा ॥ ५४ ॥ चतुरक्षा इवासंख्याः शृण्वन्त्यपि न चापरे । एके त्वसंज्ञिपञ्चाक्षवदसंख्या अमानसाः ॥५५॥ असंख्याश्चापरे स्पष्टचेतना नारका इव । छेदभेदादिभिर्बाढं क्लिश्यन्ते मदविह्वलाः ॥ ५६ ॥ एके पुनरसंख्येयाः पञ्चाक्षपशुसन्निभाः । कृत्याकृत्यमजानन्तो भजन्ति जननीमपि ॥ ५७ ॥ लोलन्ति भूतले केचित्केचिदुत्प्लुत्य यान्ति खे । केचिज्जले निमज्जन्ति नानादुःखसमाकुलाः ॥५८॥ लुठन्तो भूतलेऽन्ये च संमूर्च्छनजमर्त्यवत् । वान्तं पित्तं शकृन्मूत्रमसंख्या भक्षयन्त्यलम् ॥५९॥ स्तेयाब्रह्ममृषाहिंसाद्यासक्ता मारणादिकम्[3] । संख्येयाश्चाप्नुवन्त्युच्चैर्दुःखं गर्भजमर्त्यवत् ॥ ६० ॥ असंख्याः पुनरन्ये च चतुर्वृन्दव्यवस्थिताः । सन्ति लोका मदाध्माताश्चतुर्विधसुरा इव ॥ ६१ ॥ विषयैः सुखितंमन्यास्ते च यद्यपि पञ्चभिः । तथापि दुःखिता एव शोकेर्ष्याभिभवादिभिः ॥ ६२ ॥ संख्याताश्चापरे लोकाः सन्ति संयतसन्निभाः । ये नो पिबन्ति तन्मद्यं मध्यस्थाः परमासते ॥ ६३ ॥ ततस्ते तेन लोकेन सततं मद्यपायिना । अपिबन्तोऽभिधीयन्ते ब्राह्मणा इत्यसूयया ॥ ६४ ॥ तस्मादापानकादन्ये बहिर्भूता मदोज्झिताः । लोका मुक्ता इवानन्ता विद्यन्तेऽनन्तसम्पदः ॥ ६५ ॥ इतश्चाद्येषु लोकेषु स्थित्वाहं मदघूर्णितः । लुठन्नितस्ततः प्राप्तो द्वितीयेषु कदाचन

१ °टन्त्यपरे ख० । २ °य्यवि° क० ख० ग० । ३ मार° ता० ।

॥ ६६ ॥ एवं च मे मया भद्र ! कथितास्ते भयोदय । लोकभेदाः समासेन स्वरूपेण च वर्णिताः ॥ ६७ ॥
तेषां प्रथममनन्तो च मुक्त्वान्येषु दशस्वपि । अनन्तवाराः पापोऽहमटितो मदविह्वलः ॥ ६८ ॥ युग्मम् ॥
अन्येद्युरतिबीभत्से तस्मिन्नापानके भ्रमन् । बाधितो विविधैर्दुःखैर्दस्तैर्मायापैरहम् ॥ ६९ ॥ ततस्तैर्मासि
कारुण्यैश्चिन्तितं पदसाविह । वराकोऽनुभवत्युच्चैरसुखं मद्यदोषतः ॥ ७० ॥ तदेनं मद्यविरतिं कारयामः
कथमन । सुखभावनमस्मद्वत् येनायमपि जायते ॥ ७१ ॥ ध्यात्वेति तैस्तथा यत्नो विदधे मम बोधने ।
यथा मद्यस्य विरतिं कारितोऽहं शनैः शनैः ॥ ७२ ॥ जातोऽहमपि तादृक्षो प्राशमो भाजनाम ते । सर्वे प्रव्रजिता-
स्तन्मध्येऽहमपि तादृशः ॥ ७३ ॥ किन्तु वीर्यति नाद्यापि मद्याजीर्णं ममास्थितम् । सरयिष्यामि तदपीद
मे वैराग्यकारणम् ॥ ७४ ॥ तच्छ्रुत्वा किमनेनोक्तं विमृशमिति नैरदिः । जातजातिस्मृतिः पूर्वभवार्थं भूतमस्मरत्
॥ ७५ ॥ ततो विज्ञातसाधूक्तमायार्थो मुदिताशयः । तं नत्वा स मुनीपस्य मुनेरभिमुखं ययौ ॥ ७६ ॥ मया च
पूर्वभवप्रोऽहकस्तुः प्रत्यमायत । मोक्षः संसार एवायमनेनापानकच्छलात् ॥ ७७ ॥ यस्मिन्न गदिता जीवा
मनन्ता मद्यपालयाः । तेषं मद्यं तु कर्माणि कषायाः पुनरासवाः ॥ ७८ ॥ सुरा च घातिकर्माणि सरका नो
कषायकाः । सदाचारतपार्यूंषि भावनानि मतानि तु ॥ ७९ ॥ चषकाः कर्ममद्योपभोगाङ्गत्वेन देहिनाम् । देहाः
शोका हीक्षणि पुनस्तच्चपचसतः ॥ ८० ॥ लौल्यहेतुतया चात्र नीलोत्पलनिभानि च । मर्दलाः कलहा दैन्यक-
विततानि च कंसिकाः ॥ ८१ ॥ खला मृगकृगायन्त्वाः कांस्यतालनिभा मताः । वीभारवाः सदुःखानां परिदेवन

कानि च ॥ ८२ ॥ वंशस्वनाः सशोकानां लोकानां कूजितानि तु । विलासहासनृत्ताद्या भावा ज्ञेयास्तथैव त
॥ ८३ ॥ त्रयोदशभिदा ये च लोकास्तत्र प्ररूपिताः । ते दृष्टान्तमिषादेव सूचिता देहिनो मताः ॥ ८४ ॥ आख्यायि
लेशतस्तेषां स्वरूपं च तथात्मनः । मत्तबालकता कर्म्ममद्यपानात् तदन्तरे ॥ ८५ ॥ अव्यवहारिजीवेषु
पूर्वं स्वस्य न्यवेद्यत । अवस्थानं ततस्तेभ्योऽनन्तकालाच्च निर्गमः ॥ ८६ ॥ अव्यवहारिकयतिसिद्धवर्जं दशस्वपि ।
स्थानेषु भूयो भूयोऽपि भ्रमणं कथितं ततः ॥ ८७ ॥ संसारापानके भ्राम्यंस्तीव्रदुःखार्दितस्ततः । दृष्टोऽयमपरे-
द्युस्तैः संयतैर्ब्राह्मणोपमैः ॥ ८८ ॥ तैश्च संजातकारुण्यैर्बोधितोऽयं शनैः शनैः । प्रव्रज्य कर्म्मरूपस्य मद्यस्य
विरतिं न्यधात् ॥ ८९ ॥ प्रव्रज्यया च तत्कर्म्ममद्याजीर्णमयं मुनिः । जरयित्वा भवापानाद् बहिर्भूतो भविष्यति
॥ ९० ॥ तदिदं स्वस्य वैराग्यकारणं मुनिनामुना । प्रोक्तमेतच्च सर्वेषां सामान्यं घनवाहन ! ॥ ९१ ॥ संसारा-
पानके स्थातुं तदीदृश्यावयोरपि । न युक्तमथ तच्छ्रुत्वा पापोऽहं मौनमाश्रयम् ॥ ९२ ॥ अथ पृष्टोऽकलङ्केन
तृतीयमुनिराख्यत । वैराग्यकारणं स्वस्यारघट्टं भवनामकम् ॥ ९३ ॥ तथाहि नित्यवाह्येष तत्र सारथयो मताः ।
चत्वारः कर्षका रागद्वेषमिथ्यात्वमन्मथाः ॥९४॥ महामोहः सीरपतिः कषायाख्याश्च षोडश । विनापि चारिपानीयं
वेगवन्तो वृषाः स्मृताः ॥ ९५ ॥ हास्यादयः कर्म्मकरा रत्याद्याः कर्मकारिकाः । दुष्टयोगप्रमादाख्यं तत्र तुम्बद्वयं
महत् ॥ ९६ ॥ विलासोल्लासविब्बोकरूपास्तत्रारकाः स्मृताः । कूपः पापाविरत्यम्बुपूर्णो जीवस्त्वसंयतः ॥ ९७ ॥
पापाविरतितोयौघमग्नपूरितरेचितम् । जीवलोको घटीयन्त्रं स्फुरन्मरणखाट्कृतिः ॥ ९८ ॥ अज्ञानमलिनात्माख्यो

वेषस्तत्र प्रतीच्छकाः । इह मिथ्याभिमानाख्य तत्र वार्त्तिक मठम् ॥ ९९ ॥ संक्लिष्टचित्ता निर्वहणी कृपया
तु लोलता । क्षेत्र मन्मतविप्राः परापरजनमपि तु ॥ १०० ॥ कर्मापि जीवं तज्जीवपरिणामस्तु पापकः । असत्को
पामिषः पानान्तिकः सिध्यति तस्सदा॥१०१॥ ततस्तेनारघट्टेनोप्त सिक्त सिद्धिमागतम् । सुखदुःखादिशस्यौषजनक
तदुद्गतम्॥१०२॥ मठारघट्टे तत्राह प्रसुप्तः सुचिरं स्थितः । ततः प्रबोधितोऽनेन गुरुणा करुणावता ॥१०३॥ तदा
देशनरं तीर्थं जगृहे पारमेश्वरीम् । मठारघट्टस्यामायैतन्मे वैराग्यकारणम् ॥१०४॥ ततोऽकलङ्कस्तच्छ्रुत्वा वन्दित्वा
तं मुनिं मुदा । प्रचलस्य च मया सार्द्धं दुर्गसाधुं समाश्रयत् ॥ १०५ ॥ ततस्तमपि मत्प्रोक्तवे वैराग्यकारणम् ।
अपृच्छदकलङ्कोऽपि स चञ्चमठमाख्यत ॥ १०६ ॥ तथाहि चक्रेस्थितुक्तिर्नानारूपे कश्चिन्मठे । कुटुम्बमेक
संप्राप्य मुख्यमानुपपत्तकम् ॥ १०७ ॥ हितपुत्रस्त्री प्रतिपेदे तत्र चैर्यपि तैर्वृतैः । अन्येद्युर्भोजन तेन चित्र छात्र
कृते कृतम् ॥ १०८ ॥ संस्कृत्य मन्त्रयोगैस्तत्तेभ्यो दत्त ततो महान् । सन्निपातस्तयोन्मादस्तेषामस्वच्छनादभूत्
॥ १०९ ॥ तद्वशेन च ते पञ्चाः कथिञ्चिगतचेतनाः । भूतग्रस्ता इवाभूवन्नन्ये चासम्प्रलापिनः ॥ ११० ॥ अपदो
चारकमपि तन्मध्ये तद्विधोऽभवम् । ततो महारमनानेन चायुर्वेदविदान्वता ॥ १११ ॥ अपाकृत्य ततः सन्निपातो
न्मादौ स्वभेषजैः । अनुकम्पावतानेन कृतोऽहं स्पष्टचेतनः ॥ ११२ ॥ गुरोरस्योपदेशेन भद्र ! सांप्रतमप्यमूम् ।
ममन्यामाचरमस्मि मोहनाम्नीर्णशोषिनीम् ॥ ११३ ॥ यां यां चोपदिशत्येष क्रियां मे सुनिपुङ्गवः । तां तामह
करोम्येतन्मम वैराग्यकारणम् ॥ ११४ ॥ ततोऽकलङ्कस्तच्छ्रुत्वा मममन्यमुनिं प्रति । मया प्रोक्तोऽस्य भाषार्थे

कथयेत्यथ सोऽवदत् ॥ ११५ ॥ अनेनापि मुनीन्द्रेण संसारो घनवाहन ! । दृष्टश्चट्टमठाकारः स चेत्थं मे निवेदितः ॥ ११६ ॥ परस्परमसम्बद्धास्तत्र चट्टाश्च जन्तवः । रागादिककुटुम्बं च तैरिदं वैर्यपि स्फुटम् ॥ ११७ ॥ प्रमादो योगमिथ्यात्वे कषायाविरती तथा । अमीभिः पञ्चभिर्मुख्यैर्मानुषैर्युक्तमाहतम् ॥ ११८ ॥ युग्मम् ॥ तत्प्रदत्तं च कर्मान्नभोज्यमश्नन्ति सर्वदा । ते महामोहमन्त्राद्यं ज्ञानावरणयौगिकम् ॥ ११९ ॥ ततश्चात्यशनोद्भूत-गाढाजीर्णवशादमी । गृह्यन्ते सन्निपातेन मिथ्यात्वाज्ञानरूपिणा ॥ १२० ॥ अतत्त्वाभिनिवेशाख्योन्मादेन च ततोऽङ्गिनः । धर्माधर्मौ न जानन्ति जानन्ति व्यत्ययेन वा ॥ ॥ १२१ ॥ तन्मध्ये साधुरेषोऽपि तथा-रूपो विलोकितः । गुरुणा वैद्यकल्पेनानल्पानुक्रोशशालिना ॥ १२२ ॥ सिद्धान्तवैद्यशास्त्रोक्तविविधार्हद्वचोऽगदैः । अज्ञानसन्निपातोऽयमस्य दूरीकृतस्तदा ॥ १२३ ॥ अतत्त्वाभिनिवेशाख्य उन्मादश्चापि नाशितः । तद्दीक्षा-क्रियया कर्माजीर्णं च जरयत्ययम् ॥ १२४ ॥ आवयोरपि तद्दीक्षाविधानाद् घनवाहन ! । विधातुमधुना युक्तं कर्मान्नाजीर्णशोधनम् ॥ १२५ ॥ मयि तूष्णींस्थिते पापेऽकलङ्केनाथ पञ्चमः । गत्वा नत्वा मुनिः पृष्टः किं ते वैराग्यकारणम् ? ॥ १२६ ॥ मुनिः प्राह ममाख्यातं गुरुणैकं कथानकम् । तदेव मम संजातं भद्र ! वैराग्य-कारणम् ॥१२७॥ तथाहि वसन्तपुरे चत्वारः सुहृदः पराः । चारुर्योग्यो हितज्ञश्च मूढ इत्याह्वयाभवन् ॥ १२८ ॥ पारावारमपारं तेऽन्यदा प्रोल्लङ्घ्य दुस्तरम् । रत्नानामर्जनकृते रत्नद्वीपमुपाययुः ॥ १२९ ॥ तत्रानेकविधोपायैर-

प्रमथेन चारुणा। अर्जितैर्भूरिभी रत्नैर्बोहित्थं पूरितं निजम् ॥१३०॥ योग्यः पुनः काननादिकौतुकी सोऽन्तरान्तरा। संगृह्णन् भूरिकालेन स्तोकरत्नान्यमेलयत् ॥ १३१ ॥ हितज्ञस्तु स्वयं रत्नपरीक्षायामदक्षधीः। अन्यस्य कथिते घच स्वचिते प्रत्ययं पुनः ॥ १३२ ॥ ततो रत्नधिया तेन काचशकलकादयः। अगृह्यन्त धूर्तलोकसञ्चितेनर्जुभावतः ॥ १३३ ॥ अजस्र ध्रियते सोऽपि काननादिकुतूहलैः। न वेत्ति यदय यासि दिनैः सार्थो निरर्थकः ॥ १३४ ॥ लाति रत्नधिया मूढः पुनः काचादि धूर्ततः। ध्रियते कौतुकैमोपदेश न बहु मन्यते ॥ १३५ ॥ मन्मित्रैः किं कृतमितिधिया चारुस्ताऽऽययौ। योग्यस्यान्ते रत्नमुतबोहित्थो गन्तुमुद्यतः ॥ १३६ ॥ कथितश्च समस्तोऽपि स्वाभिप्रायोऽस्य चारुणा। पृष्टश्चाय किंयन्ति त्व मित्र! रत्नान्यमीलयः? ॥ १३७ ॥ प्रदर्शितेषु योग्येन निजरत्नेषु तेष्वथ। चारुः प्रोवाच किमिति स्तोकान्येवार्जयद्भवान्? ॥ १३८ ॥ ततो योग्येन कथितं सर्व मात्मीयचेष्टितम्। परिखिन्नमनास्तत्र भुक्त्वा चारुरमापत ॥ १३९ ॥ रत्नद्वीपागतस्यापि वृथा ममयतो दिनान्। स्वार्थभ्रष्टो न युक्तस्ते कौतुकैः काननादिभिः ॥ १४० ॥ एवं च शिक्षया चारोर्योग्यो मनसि लज्जितः। तमुवाच दिनानि त्वं कत्यपि प्रैक्षिपालय ॥ १४१ ॥ चारुणा प्रतिपन्नेऽथ कौतुकानि विमुच्य सः। योग्यः सर्वप्रयत्नेन रत्नानामर्जनेऽलगत् ॥ १४२ ॥ अथ पृष्टो हितज्ञोऽपि चारुणा मित्र! किं त्वया। रत्नद्वीपमद्य प्राप्य मीलितं मम

१ °बोधित्थ ता० क०, °बोधित्थ ग० प०। २ °नसार्थो ता० क० स० प०। ३ °बोधित्थो ता० क०, °बोधित्थो म० प०। ४ मत्पपाक्षपः क० प०, मत्पपाक्ष ग०।

दर्शय ॥ १४३ ॥ तेनाथ दर्शितं काचशुक्तिशङ्खनकादिकम् । कथितं च स्वचरितं काननादिविहारवत् ॥ १४४ ॥ चारुणोक्तं त्वया भद्र ! काननादिषु कौतुकम् । न कर्त्तव्यं ध्रुवं धूर्त्तैरसि त्वं विप्रतारितः ॥ १४५ ॥ अमूदृशानि रत्नानि वयस्य ! न भवन्ति यत् । रत्नानां लक्षणं ह्येतदेतच्च ननु बुध्यताम् ॥ १४६ ॥ ततः परीक्ष्य रत्नानि स्वीकार्याण्यथ तद्वचः । प्रतिपद्य हितज्ञेन तथैव विदधेऽखिलम् ॥ १४७ ॥ मूढस्यापि निजं भावं स्वस्थानगमनादिकम् । चारुराख्यत्ततो मूढस्तं प्रत्येवमभाषत ॥ १४८ ॥ गमनेन कृतं मित्र ! स्थातुमत्रैव युज्यते । द्वीपेऽतिरुचिरक्रीडाकाननादिककौतुके ॥ १४९ ॥ मयास्ति नानारत्नौघैर्यानपात्रं च पूरितम् । इत्युक्त्वाऽदर्शयन्मूढः काचखण्डादिशालि तत् ॥ १५० ॥ चारुणोक्तं न ते युक्तं वञ्चनं कर्तुमात्मनः । कौतुकैः काननादीनां रत्नद्वीपेऽत्र दुर्लभे ॥ १५१ ॥ तथैतानि न रत्नानि यानि रत्नानि मन्यसे । तच्छ्रुत्वा कुपितो मूढश्चारुमेवमवोचत ॥ १५२ ॥ गच्छ त्वं गच्छ नो कार्यं मित्रेणापीदृशा त्वया । यस्त्वं मदीयरत्नानि न रत्नानीति भाषसे ॥ १५३ ॥ नाहं समं समेष्यामि त्वद्रत्नैः पूर्यतां च मे । तच्छ्रुत्वाचिन्तयच्चारुर्नैष शिक्षोचितः कुधीः ॥ १५४ ॥ रत्नानां यानपात्राणि पूरयित्वा निजान्यथ । सार्द्धं योग्यहितज्ञाभ्यां चारुः स्वस्थानमागतः ॥ १५५ ॥ रत्नानां विनियोगं च कुर्वाणास्तत्र ते त्रयः । अनन्तानन्दसन्दोहपूरिताः सुखमासते ॥ १५६ ॥ मूढस्तु दुःखदारिद्र्यभाक् क्रुद्धेन महीभुजा । प्रक्षिप्तः सागरे घोरेऽनन्तयादःप्रपूरिते ॥ १५७ ॥ तदिदं ते मयाख्यातं सूरिप्रोक्तं कथानकम् । यत्तदा

१ °मत् क० ग० घ० । २ पर्याप्तम् इत्यर्थः ।

मम मवाम मत्र । वैराग्यकारणम् ॥ १५८ ॥ मङ्कलस्तुस्ततो नत्वा मुनिमन्यमुनिं प्रजन् । मया मावार्थमास्थान
स्थाम्न दृष्टोऽन्यपादिनि ॥ १५९ ॥ समन्तपुरतुरपोऽपमत्रासोऽप्यपहारिकः । कीवराशिर्वापिमकाः पुनस्तस्मादि
निपता ॥ १६० ॥ बोराभतुर्विधामावादपः मान्यपनामकाः । समुद्रः पुनरत्रैव प्रेयः संसारविस्तरः ॥ १६१ ॥
मपल्गुमारत्नानां स्तुत्पनद दुर्लभः । रत्नदीपममानोऽप्य मेपो मपर्षमपः पुनः ॥ १६२ ॥ लघुकर्मा तमासाद्य
र्धर्मपाठममोऽनुमान् । पतिकमाप्यपानिन्येनावपेद्रत्नसंभिमम् ॥ १६३ ॥ ज्ञानदर्शनचारित्रधमामममवादिकम् ।
तेन पोषोरम जीवस्वरूपं दूपेप मः ॥ १६४ ॥ युग्मम् ॥ पोग्पतुरपः पुनर्देशविरतः श्रावको मतः । पनादि
भेदकमन्ये धेजन् मोगमुर्गादिके ॥ १६५ ॥ दाक्षिण्यादेव साप्नो पतमानश्च भूपसा । कालेन गुणरत्नानि
ज्ञानादीनि पिनोत्यपि ॥ १६६ ॥ युग्मम् ॥ कश्चिद्दितमतुरपस्तु मिथ्यात्वम् मरुपमद्भकः । ममानानः स्वपं
ज्ञानादिरत्नपरीक्षणम् ॥ १६७ ॥ आदपे पूपसारैर्विप्रलब्धः कुतीर्थिकैः । कपर्दकापतुरयानि पमशोमादिकान्यलम्
॥ १६८ ॥ युग्मम् ॥ दिनं दिनेऽपिया कल्पमान पेपपेप कि पुनः । ह्रियते कौटुकौपम्यैः मुसैर्विपपसम्भवैः ॥ १६९ ॥
समप्यो दूरमप्यो पा कपि मूलमपः पुनः । स्वप नैव विजानाति धर्मरत्नपरीक्षणम् ॥ १७० ॥ धर्मरत्नधिया
पापरोमादीनि म मोहलः । गृह्णाति कापकल्पशुक्त्यादिसदृशा पतः ॥ १७१ ॥ हिंसोपदेशदातारमपि द्वेष्टि
दिनं मया । मन्यते पित्रकरोगान् मोगिमोगनिमानपि ॥ १७२ ॥ पथा प पाप्मा तेन स्वस्थानं गच्छता

१ भ्रमन् क० ख० ग० घ० । २ न्यादिकम् क० ख० ग० घ० । ३ मुकोरम्ये। क० ख० ग० घ० ।

सता । पृष्टो योग्यः परिज्ञाततद्वृत्तान्तेन चादरात् ॥ १७३ ॥ रत्नद्वीपममुं प्राप्य स्वार्थभ्रंशो न युज्यते । तवेत्याद्युपदेशेन शिक्षयित्वा प्रवर्त्तितः ॥ १७४ ॥ युग्मम् ॥ तथैव यतिरात्मानं गुणैर्ज्ञानक्रियादिभिः । परिपूर्णं त्रिधायोच्चैर्यियासुः परमं पदम् ॥ १७५ ॥ श्रावकं प्रेरयत्येवं कृतस्तोकगुणार्जनम् । यथा न युज्यते कर्तुं तवैवं निशदाशय ! ॥ १७६ ॥ धनभोगसुखादीनां व्याक्षेपेणातिमूर्च्छितः । दुष्प्रापं प्राप्य मानुष्यं स्वार्थभ्रंशं करोषि यत् ॥ १७७ ॥ ततः साधुक्रियावाणिज्येन सोऽपि प्रवर्त्तते । गुणरत्नान्युपादातुं धनभोगपराङ्मुखः ॥ १७८ ॥ यथा च चारुणा पृष्टो हितज्ञः शिक्षितश्च सः । काचादिपूरिते पोते स्वकीये दर्शितेऽमुना ॥ १७९ ॥ तथा भद्रक मिथ्यादृगपि [1]प्रेर्येत साधुना । यथा भोगेष्वभिष्वङ्गस्तव नैव समञ्जसः ॥ १८० ॥ धूर्त्तैः कुतीर्थिकैरेभिर्वञ्चयित्वार्पितानि च । काचतुल्यान्यहो ! यज्ञहोमादीनि परित्यज ॥१८१॥ परीक्ष्य श्रुतशीलादिलक्षणैस्त्वं गृहाण च । धर्मतत्त्वानि रत्नानि कुरुते सोऽपि तत्तथा ॥ १८२ ॥ यथा च मूढः स्वस्थानगमनं प्रति चारुणा । भाषितः सन् द्वीपवासमेव श्लाघितवान् भृशम् ॥ १८३ ॥ पुनः पुनः शिक्षितोऽपि काचशङ्खनकादिषु । रत्नबुद्धिं कुबुद्धिः स कथञ्चिदमुचच्च न ॥ १८४ ॥ तथा मूढनिभो दूरभव्योऽभव्योऽथवा पुमान् । उत्साहितोऽनगारेणापुनर्भवगतेः कृते ॥ १८५ ॥ श्लाघां करोति संसारनिवासस्यैव केवलम् । यागहोमादिपापेषु धर्मबुद्धिं च नोज्झति ॥ १८६ ॥ भोगादिषु निषिद्ध[2]श्च क्रुद्धः सन्वदतीदृशम् । मोक्षे भवन्तो गच्छन्तु तेन मे न प्रयोजनम् ॥ १८७ ॥ तं

१ प्रेर्यते सा० क० ग० घ०, प्रेर्यत सा० ता० । २ ष्ठ ग० ।

विशुध्याप ज्ञानादिरत्नैः सभाद्यमृद्धकः । जीवस्वरूपपोतानापूर्यं साधुः शिव भजेत् ॥ १८८ ॥ ज्ञानादिफलमूत च तन्नानापापमक्षयम् । प्राप्नोति परमानन्दं ज्ञानदर्शनवीर्ययुक् ॥ १८९ ॥ अभव्यं तु भावरत्नहीनत्वात् बोऽस्व्यदुःखितम् । कुदः कर्मपरीणामः क्षिपते भववारिधौ ॥ १९० ॥ एवं कथानकस्यास्य ज्ञात्वा भावार्थमी क्षम् । अय प्रबभिणो जातः साधुर्मो ! धनवाहन ! ॥ १९१ ॥ इत्थं कथानके अत्र श्रुते को न मुनिर्भवेत् । रत्नैर्भूत्वारमर्मोदिस्य निर्वाणं कथ न भजेत् ? ॥ १९२ ॥ अथागृहीतसङ्केते ! शृण्वतो मे तदेक्षम् । अकलङ्क वषो बही कर्मणां ह्रसिता स्थितिः ॥ १९३ ॥ अकलङ्को मया सार्धमथ पश्चमुनि ययौ । नत्वापृच्छ्य वैराग्यकारणं सोऽप्यथीकथत् ॥ १९४ ॥ योऽय ध्यानस्थितः साधुस्तेन मे भद्र ! दर्शितः । दृष्टान्ता संस्तुतेः पुर्णा सोऽभूद्वैराग्यक मम ॥ १९५ ॥ तथास्ति क्षमायुक्तो भवाख्यापवपद्विभिः । भूरिभिः सुखदुःखोरुव्यैः पथ्येव परिपूरितः ॥ १९६ ॥ जीवनाधिसधैर्नित्यं स्वार्थनिष्ठैश्च सेवितः । दृश्यमार्गो महान् च भवसन्तान इति नामतः ॥ १९७ ॥ युग्मम् ॥ तत्र पापिजीवरोरे( रैः ) सम्यान्युत्पादितापथे । पथ्यानि सुखदुःखानि पुण्यापुण्याख्यवेतनैः ॥ १९८ ॥ महामोहो महाध्यक्षस्तत्र कामादिपथियुक् । विलसन्ति कषायाख्यास्तत्र घोन्मत्तडिम्भकाः ॥ १९९ ॥ किञ्च जीवाधमर्णानां कर्मास्थ्यैर्धनिकैरिह । क्षिपते घरके घोरे तेन तेऽत्यन्तदुःखिनः ॥ २०० ॥ अथान्ये दृश्य माधुः कृपापूरितमानसः । विशोधने ममानक्ष ज्ञानाञ्जनशलाकया ॥ २०१ ॥ ततो दृष्ट्वा मयोपीणो

१ °बोधिस्य ता० ह०, °बोधिस्वं ग० प० ।। २ °वाचः प° ता० ।

मठो नाम्ना शिवालयः । व्यलोकि तत्र चानन्ता मुक्ताख्याः सुखिनो जनाः ॥ २०२ ॥ निर्विण्णोऽहं ततो द्रुमार्गात् तत्र यियासया । तत्प्रापिकां गुरुप्रोक्तां दीक्षामेनां समाददे ॥ २०३ ॥ गुरुः प्रोचे च मां सौम्य ! वासार्थं त्वत्परिग्रहे । कायाख्योऽस्त्यपवरकः पञ्चाक्षाख्यगवाक्षयुक् ॥ २०४ ॥ तत्र कार्मणदेहाख्यं गर्भगेहं च विद्यते । कायपञ्चाक्षाभिमुखक्षयोपशमरन्ध्रयुक् ॥ २०५ ॥ तत्र वानरलीवं च चित्ताख्यमतिचञ्चलम् । त्वया सुरक्षितं तच्च करणीयं निरन्तरम् ॥ २०६ ॥ तत्रस्थं भक्ष्यते तद्धि कषायाभिधमूषकैः । वृश्चिकैर्नोकषायाख्यैः क्रियते चातिचञ्चलम् ॥ २०७ ॥ रागद्वेषसंज्ञकोलोन्दुराभ्यां च विलुप्यते । महामोहौतुना संज्ञामार्जारीभिश्च भक्ष्यते ॥ २०८ ॥ परीषहोपसर्गैश्चाशंस्यते मशकदंशकैः । विह्वलीक्रियते दुष्टाभिप्रायोल्वणमत्कुणैः ॥ २०९ ॥ अलीकचिन्तासंज्ञाभिरत्यन्ताशुभहेतुभिः । गृहकोकिलिकाभिश्च सर्वदाप्युपताप्यते ॥ २१० ॥ प्रमादाख्यकृकलासै-रजस्रमभिभूयते । घनाविरतिजम्बालयूकाजालेन तुद्यते ॥ २११ ॥ तथान्धीक्रियते मिथ्याज्ञानध्वान्तेन तत्ततः । रौद्रध्यानाभिधेऽङ्गारकुण्डे पतति पीडितम् ॥ २१२ ॥ कुतर्कलूतिकातन्तुजालाबद्धमुखे तथा । कदाचित्प्रविशत्येतदार्तध्यानमहाबिले ॥ २१३ ॥ तदेतदप्रमत्तेन रक्षितव्यं त्वया सदा । मया तद्रक्षणोपायं पृष्टः प्राह पुनर्गुरुः ॥ २१४ ॥ तत्रापवरके भद्र ! गवाक्षाः पञ्च सन्ति ये । तद्द्वारे पञ्च विद्यन्ते विषयाख्या विषद्रुमाः ॥ २१५ ॥ ते चातिदारुणा गन्धदर्शनस्पर्शनाशनैः । श्रवणस्मरणाभ्यां च निश्चितं मारयन्त्यदः ॥ २१६ ॥ इदं

१ °स्यते ता० । २ दूयते ता० ।

वानरलीव तु तानाभस्तेन मेन्यते । ततो गवाक्षैर्निर्गत्य तेषां भवति संमुखम् ॥ २१७ ॥ ततश्च सुन्दराणीति पुष्पा केऽप्यपि रम्यते । फलेष्वसुन्दराणीति द्वेष भवे च केषुचित् ॥ २१८ ॥ लुठत्यविरतामेवत् तथार्थनिषयाभिधे । पत्रपुष्पफलवरे तरुसोमूमिवर्तिनि ॥ २१९ ॥ तेषु भास्यस्यविक्षोरयेनाक्षेपशाखान्तरेष्वपि । ततश्च गुप्यते कर्म पराणुसुमरेणुना ॥ २२० ॥ तथार्द्रीक्रियते मोगस्नेहास्यमधुबिन्दुभिः । ततो विज्ञाततद्भावमावार्थोऽभ्रम चिन्तयम् ॥ २२१ ॥ इमाः श्वम्रादयः पुष्पाण्येषामेव विशेषकाः । फल स्फुन्तराः शाखान्तराणि तु तदाभयाः ॥ २२२ ॥ तेषु संचरण चित्तस्योक्त छोकोपचारतः । यदाहुर्लौकिकाभिरत्तमस्तकत्र गतं मम ॥ २२३ ॥ एव स्थिते मया बुद्धमिदं सर्वं मुनेर्वचः । विचिन्त्येति मया प्रोक्तं पश्चयन्त्व ! ततस्ततः ? ॥ २२४ ॥ गुरुराह ततो भद्र ! स्नेहार्द्रेऽस्य शरीरके । रमसो मेदकत्वेन संभूतैः पीड्यते घतैः ॥ २२५ ॥ रमसा विपरूपेण तस्य दग्धस्य छम्पता । रक्तता च भवेत् तैस्तैर्मार्यते तदुपद्रवैः ॥ २२६ ॥ तत् त्वया भद्र ! तैर्मिर्यभिमपीर्याभिधे करे । भ्रमणात् चमदण्डमासपास्क्रोध्यमूषकैः ॥ २२७ ॥ यथा न विषयभूमौ निर्याति फललिप्सया । अन्यथा चिरकालीनं पक्रमस्य भविष्यति ॥ २२८ ॥ तथापुपद्रवैस्तैस्तैः पीडित मूषकादिभिः । वेदनाविह्वलं मोहाद्याकेषु प्रवर्तते ॥ २२९ ॥ गुप्यते रमसा भूयो मियते स्यन्दबिन्दुभिः । ततः क्षतानि जायन्ते चाप्यते मूषकादिभिः ॥ २३० ॥ ततस्तत्क्षणासक्ता वर्धन्ते मूषकादयः । भूयश्च चाप्यमानं तैराम्रकेष्वेव धावति ॥ २३१ ॥ पुनर्गुप्यनमेवास्य

१ मन्यते ग० । २ ततो भाव्यति जो॰ ग० । ३ गुरोर्वचः क० ख० ग० । ४ तन्निर्याति ता० क० ।

स्नेहेन पुनरार्द्रता । पुनश्च क्षतसंपत्तिः पुनः सर्वेऽप्युपद्रवाः ॥ २३२ ॥ रक्षिते निर्गमे त्वस्य भोगस्नेहार्द्रतैष्यति । शोषां(°पं) शुष्कशरीराच्च रजः परिस(°श°)टिष्यति ॥ २३३ ॥ ततः क्षतानि रोक्ष्यन्ति नङ्क्ष्यतो रक्तकृष्णते । भविष्यति वपुःस्थैर्यं नैर्मल्यं दर्शनीयता ॥ २३४ ॥ किञ्चाप्रमाददण्डेन चूर्ण्या ओत्वादयोऽपि ते । येन गर्भ-गृहस्थस्य तस्य न स्युरुपद्रवाः ॥ २३५ ॥ तदस्य रक्षणोपायो भद्रैषोऽथ मयोदितम् । भदन्त ! रक्षितेनैवं किमेतेन भविष्यति ? ॥ २३६ ॥ गुरुराह तवाभीष्टा शिवालयमठे गतिः । तस्या हेतुरिदं चित्तवानरं हि सुरक्षितम् ॥ २३७ ॥ ततो ध्यातं मया हन्त चित्तं रागाद्युपद्रुतम् । विषयेषु प्रवर्त्तेताऽथादत्ते कर्मसंचयम् ॥ २३८ ॥ स्नेहार्द्रताथ संसारसंस्काराः स्युः क्षतोपमाः । ततस्ते प्रभवन्त्यत्र भूयो रागाद्युपद्रवाः ॥ २३९ ॥ तैर्भूयो विषयेष्वेति पौनः-पुन्यात् तथैव तत् । तदेवं चक्रके मग्नं चित्तमेतन्न मुच्यते ॥ २४० ॥ अप्रमादः स्ववीर्येण गुरुणास्य च रक्षकः । प्रोक्तो मे युज्यते कर्तुं ध्यात्वेत्यस्मि करंस्तथा ॥ २४१ ॥ अभ्यधादकलङ्कोऽथ साधु बुद्धं गुरोर्वचः । दृढार-म्भेण चारम्भि साध्वस्याचरणं त्वया ॥ २४२ ॥ ततो मुनिमनुज्ञाप्य निजाभ्यूहितचक्रकम् । मुनिचक्रक-सङ्काशमकलङ्कोऽभ्यधादिति ॥ २४३ ॥ चित्तमेतद् द्विधा तावद् द्रव्यतो भावतस्तथा । आद्यं पर्याप्तियुक्तात्म-गृहीतं पुद्गलात्मकम् ॥ २४४ ॥ तत्रोपयुक्तो जीवस्तु भावचित्तं निगद्यते । तत्कार्मणशरीरस्थं तेन भिन्नं [3]निवेद्यते ॥ २४५ ॥ तच्चित्तं नियमाज्जीवो जीवश्चित्तं न वा भवेत् । यतः केवलिनो जीवा भावचित्तविवर्जिताः ॥ २४६ ॥

१ °ता च स° क० ख० ग० । २ तद् भयाद् विषयेष्वेति ता० ख० । ३ न विद्यते क० ख० ग० घ० ।

मूर्ध्वतः ॥ २६२ ॥ तुर्यस्त्रीपदिकारोहेऽस्य तापोऽल्पीभविष्यति । यास्यन्त्युपद्रवाः कार्श्यमाम्रेच्छापि त्रुटिष्यति
॥ २६३ ॥ रोक्ष्यन्तीषत् क्षतान्यस्य रजः परिस(°श°)टिष्यति । ततः सुखासितं तेजोभासि वर्णेन भावि तत्
॥ २६४ ॥ पञ्चमस्त्रीपदिकास्वारोहात्पूर्वोदिता गुणाः । भाविनो विशिष्टतरास्तस्य शुद्धस्य वर्णतः ॥ २६५ ॥
षष्ठस्त्रीपदिकारोहात् ते विशिष्टतमा गुणाः । भाविनोऽस्य पराह्लादस्फटिकोज्ज्वलभाजुषः ॥ २६६ ॥ किञ्चात्र
स्त्रीत्रयकृते चटतः पदिकाध्वनि । धर्म्मध्यानाख्यपवनः शीतोऽस्याङ्गे लगिष्यति ॥ २६७ ॥ मिलिष्यति तथैतस्य
नितान्तहितकारकम् । बोधसंयमसंतोषशमप्रमुखवानरम् ॥ २६८ ॥ धृतिश्रद्धाधारणादिवानरीभिः समन्वितम् ।
ब्रह्मवैराग्यधैर्यादैर्युतं वानरलीवकैः ॥ २६९ ॥ शुद्धधर्म्ममहाशाखामृगेण समधिष्ठितम् । स्वाभाविकं मनोहारि
निजं वानरयूथकम् ॥ २७० ॥ विशेषकम् ॥ त्वच्चित्तवानरस्यैतत्कपियूथं करिष्यति । शुक्लध्यानाख्यगोशीर्षचन्दनेन
निषेचनम् ॥२७१॥ ततोऽर्द्धमार्गेऽतिक्रान्ते तद् गाढानन्दनिस्सहम् । आरोढुमुपरितनपदिकासु न शक्ष्यति ॥२७२॥
तत्रारूढे च भद्र ! त्वमप्यारूढो भविष्यसि । यतस्तद्वानरं तेऽन्तर्द्धनमात्मा च जीवितम् ॥ २७३ ॥ ततश्च निःस-
हीभूतं तद्विमुच्य त्वयोपरि । पदिकासु स्वयमेवारोहणीयमनुक्रमात् ॥ २७४ ॥ ततोऽन्ते पदिकास्त्यक्त्वा स्थित्वा
काशे स्वशक्तितः । पञ्चह्रस्वाक्षरोच्चारमात्रं कालमनाश्रयः ॥ २७५ ॥ मुक्त्वापवरकं गर्भगेहं वानरकं तथा ।
उत्प्लुत्य त्यक्तहट्टाध्वा शिवालयमठं व्रँज ॥ २७६ ॥ तत्रानन्दमनन्तं च लप्स्यसेऽनन्तकालिकम् । इत्याकर्ण्य

१ °मूर्द्धतः क० ख० ग० घ० । २ शिक्ष्यति क० ख० ग० घ० । ३ व्रजे ता०, व्रजः क० ग० घ० ।

मया प्रोक्तं यदाज्ञापयति प्रभुः ॥ २७७ ॥ उपायेन ततोऽनेन मठं नेतुं शिवालयम् । यम पानरक मद्र ! गुत्वा मे निवेदितम् ॥ २७८ ॥ अथाकलङ्को निमित्तस्य समाचार्यं मुनेर्वचः । मत्रेऽगृहीतसङ्केते ! मधुपोषापा न्यथादिति ॥ २७९ ॥ एवं स्फुगचरैः सर्वं यवनेन निवेदितम् । तत् त्वया विदितं मद्र ! किं वा नो धनवाहन ! ॥ २८० ॥ कथितं मुनिनानेन विषमेव हि केवलम् । प्रवर्तमान शोषेषु मयानन्त्यनिबन्धनम् ॥ २८१ ॥ निर्दोषं तु तदेव स्यान्मोक्षसौख्यैककारणम् । यथेदं विषसम्पर्कं तस्मादन्तर्दनं परम् ॥ २८२ ॥ अर्थार्थे भोगलोल्येन यावद् धावति सर्वतः । चित्तं कुतस्त्यस्ते तावत् सुखगन्धोऽपि विद्यते ? ॥ २८३ ॥ यदद निःस्पृहं भूत्वा परित्यज्य यदि भ्रमम् । स्थिरं संपत्स्यते चित्त तदा ते परमं सुखम् ॥ २८४ ॥ भक्ते स्तोतरि कोपान्धे निन्दाकर्तरि चोरिते । यदा समं भवेच्चित्तं तदा ते परमं सुखम् ॥ २८५ ॥ स्वजने स्नेहसम्बद्धे रिपुवर्गेऽपकारिणि । स्यात् तुल्य ते यदा चित्त तदा ते परम सुखम् ॥ २८६ ॥ गम्यादिविषयग्रामे सुन्दरेऽसुन्दरेऽपि च । एकाकारं यदा चित्त तदा ते परम सुखम् ॥ २८७ ॥ गोशीर्षचन्दनालेपिवासीच्छेदकयोर्यदा । अभिन्ना चित्तवृत्तिः स्यात् तदा ते परम सुखम् ॥ २८८ ॥ सांसारिकपदार्थेषु सकलेष्वेषु ते यदा । अभिष्टं चित्तपथ स्यात् तदा ते परम सुखम् ॥ २८९ ॥ स्पृष्टे पूर्णामला धम्मबन्धुराङ्गेषु योषिताम् । निर्विकारं यदा चित्त तदा ते परम सुखम् ॥ २९० ॥ यदा सत्त्वैकसारत्वादर्थकाम-पराङ्मुखम् । धर्मे एवं भवेच्चित्तं तदा ते परमं सुखम् ॥ २९१ ॥ रजस्तमोविनिर्मुक्तं स्तिमितोदधिसन्निभम् । निष्प्रकम्पं यदा चित्तं तदा ते परमं सुखम् ॥ २९२ ॥ मैत्रीकारुण्यमाध्यस्थ्यप्रमोदोद्दामभावनम् । यदा

मोक्षैकतानं तत् तदा ते परमं सुखम् ॥ २९३ ॥ इति चित्तं विहायान्यो नास्ति भो ! घनवाहन ! । नरस्य सुखसन्दोहे सिद्धो हेतुर्जगत्रये ॥ २९४ ॥ एवं तदा मेऽकलङ्कवाक्सुधाऽप्रीणयन्मनः । दृष्टान्तमुद्गरैर्भिन्ना बह्वी कर्म्मततिस्तथा ॥ २९५ ॥ कर्मस्थितिमतीत्याहं भूयिष्ठां पूर्ववर्त्तिनीम् । अभ्यर्ण्णः संस्थितो भद्रे ! कर्म्मग्रन्थेः सुदुर्भिदः ॥ २९६ ॥ इतश्च वामदेवस्य प्रस्तावे यन्मयोदितम् । बुधसूरिवचस्तत्किं स्मरसि त्वं ? यथा किल ॥ २९७ ॥ मम पुत्रो विचाराख्यो भवचक्रं निरीक्ष्य तत् । मार्गानुसारितायुक्तः समायातो न्यवेदयत् ॥ २९८ ॥ प्राहागृहीतचारित्रधर्म्मसैन्यं यन्महामोहमहीभुजा । रुद्धं दर्पवता तच्च वीक्ष्यायातोऽस्मि तेऽन्तिके ॥ २९९ ॥ सङ्केता घ्राणदोषक्षणे त्वया । प्रोक्तं मेऽदः स्मृतं तस्मान्मह्यमाख्याह्यतः परम् ॥ ३०० ॥ ततः संसारिजीवेन प्रोक्तं यच्चित्तवृत्तिगम् । चारित्रधर्मसैन्यं तत् तस्थौ कालमनन्तकम् ॥ ३०१ ॥ ततोऽकलङ्कपार्श्वस्थे मयि तत्र बले तदा । चारित्रधर्म्मभूपालं सद्बोधसचिवोऽवदत् ॥३०२॥ देव ! मा स्म विषीदस्त्वं जितमेव बलेन नः । यतः संसारिजीवोऽस्मान्साम्प्रतं बहु मन्यते ॥३०३॥ दृश्यते चित्तवृत्तिर्यदुज्ज्वला नष्टतामसा । मन्ये मनाक् प्रसन्नस्तदस्माकं स महाप्रभुः ॥३०४॥ ततः कर्म्मपरीणाममालोच्य प्रेष्यतां प्रभो ! । प्रभोः संसारिजीवस्य समीपेऽसौ सदागमः ॥ ३०५ ॥ यतः परिचयोऽनेन भविष्यति यदा बहुः । तदा संसारिजीवो नः पक्षं कक्षीकरिष्यति ॥३०६॥ वयं परिगृहीताश्च तेन शत्रुविसूत्रणे । भविष्यामः क्षमा देवाथ नृपोऽमंस्त तद्वचः ॥ ३०७ ॥ अभ्यधत्त च सद्बोधं किमेषोऽपि प्रहीयताम् ? । सम्यग्दर्शननामास्य सन्निधाने महत्तमः ॥ ३०८ ॥ सद्बोधोऽथावदद्देव ! प्रस्तावे

प्रेषयिष्यते । महत्तमोऽपि संसारिजीवे दृष्टे सदागमात् ॥ २०९ ॥ ततोऽभ्युपगते वाक्ये मन्त्रिणस्तेन सद्‌धिया । समागतः क्रमेणाय मत्समीपं सदागमः ॥ २१० ॥ तत्प्रीत्यान्तर्निलीनोऽस्यान्महामोहादिभिः पुरा । व्यापारितो ममोपान्ते ज्ञानसंवरणो नृपः ॥ २११ ॥ अथाकलङ्कः संप्राप्तः कोविदाचार्यस्य सन्निधौ । घरेस्तस्य मया सार्धं व्यधाच्च पदवन्दनम् ॥ २१२ ॥ ध्यानं समाप्य दत्त्वा चाशिषं सोऽथ मुनीश्वरः । अकलङ्केन पृष्टः सन् निजगौ धर्मदेशनाम् ॥ २१३ ॥ तदा तस्यान्तिके सोऽथ मया दृष्टः सदागमः । ज्ञापितश्चाकलङ्केन विविधस्तद्‌गुणो चयः ॥२१४॥ ततस्तदुपरोधेन मया मन्ये ! सदागमः । प्रतिपन्नस्तदा किंचित् तुष्टेने( "नै" )वान्तरात्मना ॥२१५॥ किञ्च तस्योपरोधेन नमन्नेवान् गुरूनहम् । महापिवर्जितो जातो नमस्कारादिपाठकः ॥ २१६ ॥ अकलङ्कः पुनर्दीक्षां कोविदाचार्यसन्निधौ । गृहीत्वा सममेतेन सशिष्येण गतोऽन्यतः ॥ २१७ ॥ इतश्चोक्तो महामोहो रागकेसरिमन्त्रिणा । ज्ञानसंवरणं ज्ञात्वा सदागममयद्रुतम् ॥ २१८ ॥ स्थिता वयमियत्कालं निश्चिन्ता देव ! मङ्गलात् । ज्ञापितः सदागमेन ज्ञानसंवरणोऽस्ति सः ॥ २१९ ॥ तच्छ्रुत्वा देव ! वार्योऽसौ मया पापः सदागमः । इत्येकैको महापापो महामोहममाषत ॥ २२० ॥ तेनापि गर्वितं वत्साः ! कुर्वन्त्येतद्‌भवादृशाः । किन्तु स्वयं मया गत्वा स हन्तव्यो दुरात्मकः ॥ २२१ ॥ किञ्च मेऽन्तर्गताः सर्वे भवन्तः सर्वदा ततः । प्रतिजागरणीयोऽहं सर्वैरप्यन्तरा वरा ॥२२२॥ क्वो यूयं स्थ किन्त्वेष सदापोऽस्तु परिग्रहः । रागकेसरिपुत्रस्य सागरस्य वयस्यकः ॥२२३॥ स्वपोषानन्तु शिष्यैर्महामोहोऽथ मेऽन्तिकम् । परिग्रहगुणापाता सदागमजिघांसया ॥ २२४ ॥ ततस्तौ वीक्ष्य मे स्नेहः

संजातस्तारलोचने ! ॥ ३२५ ॥ इतश्चोपरते ताते जीमूतेऽह तदाऽ-
सार्द्धं ताभ्यां सुनिर्भरः । अनाद्यभ्यासयोगेन मां वक्ति यद्राज्यविषयादिकम् । क्षणिकं
भवम् । पुण्योदयवशादुग्रशासनोऽवनिशासनः ॥ ३२६ ॥ सदागमोऽथ सर्वं तदाख्याति चिरं स्थिरम् । तथा नास्ति-
सर्वमेतत् तत् मूर्च्छा कार्या त्वयात्र न ॥ ३२७ ॥ महामोहस्तु मे घनवाहन ! । हिरण्यधान्यरत्नादिष्वसन्तुष्टः
कताहेतुमुपदेशं प्रयच्छति ॥ ३२८ ॥ परिग्रहस्तु मां ब्रूते यथा भो ! चित्तं यावदस्ति सुलोचने ! ॥३३०॥
सदा भव ॥३२९॥ ततस्त्रयाणामप्येषां शृण्वतो वचनानि मे । ईषद्दोलायितं सदागमवाग् मया ॥३३१॥ यदाहतुः पुनर्भद्रे !
तावन्महामोहबलाद् ज्ञानसंवरणो मम । आविर्भूतस्ततो बुद्धा न तत्परित्यज्य देववन्दनपूजनम् ।
महामोहपरिग्रहौ । तल्लग्नं मामके चित्ते यथा रङ्गः सुपासिते ॥ ३३२ ॥ ततोऽहं तत: परम् । घनसंग्रहणोद्युक्तः
नमस्कारादिपाठं च संजातो भोगमूर्च्छितः ॥३३३॥ दानं च साधुवर्गादौ विनिवार्य नो वाञ्छा पूर्णा सर्व-
पीडयामि करैर्जनम् ॥ ३३४ ॥ रोचते मे महामोहात् तदा नैव सदागमः । परिग्रहाच्च सन्तुष्टौ महामोहपरिग्रहौ
धनैरपि ॥ ३३५ ॥ ततो मां तादृशं मत्वा दूरीभूतः सदागमः । लब्धात्मलाभौ भद्रे ! गत्वाथ वन्दितः
॥ ३३६ ॥ स चान्यदाययौ सूरिरकलङ्कादिसाधुयुक् । मयाकलङ्कदाक्षिण्याद् चाखिलम् ॥ ३३८ ॥
॥ ३३७ ॥ ततश्च ज्ञानतो ज्ञातं तेन कोविदसूरिणा । मदीयं चरितं लोकादकलङ्केन तन्नतीम् ॥ ३३९ ॥ पुरे क्ष्मातले
ततः प्रोक्तोऽकलङ्केन सूरिराख्यत्कथां मम । सदागमे गुणं दुष्टसङ्गे दोषं च ॥ ३४० ॥ इतश्च कोविदस्यासीत्
मलनिचयाख्योऽस्ति भूपतिः । देवी तदनुभूत्याख्या पुत्रौ कोविदबालिशौ

तस्य जन्मान्तरेऽमुना । सार्द्धं सदाममेनोचैः पुरा परिचयमिरम् ॥ २४१ ॥ आविस्मृत्या ततोऽमुष्य गुणान्
ज्ञात्वा स कोविदः । तमप्रीत् च धुघुन्त्सा तदुक्तोऽपि न बालिशः ॥ २४२ ॥ इतश्च कर्म्मपरिणामेन भेषि
स्वयंवरा । श्रुतिर्नाम कन्यका कोविदबालिशयोस्तयोः ॥ २४३ ॥ कर्त्तुं तस्याश्च सम्बन्धं सज्ञाकयो दासदारकः ।
प्रहितोऽथ तथामस्य च षू द्वावपि तौ वृतौ ॥ २४४ ॥ ताभ्यां सा परिणीताथ तयोश्चास्ति परिग्रहे । पर्वतो
निषदेशाख्यस्तत्रकूटं मूर्द्धनाम च ॥ २४५ ॥ तस्य चोपान्तवर्त्तिन्योः सपरिक्षेपयोरियम् । ताभ्यामपवरिकयोः
स्थापिता भयमाक्षयोः ॥ २४६ ॥ इतश्च तां समासाद्य दृष्यो हृष्टः स बालिशः । धन्योऽहं यस्य सम्पन्ना
भार्या सर्वोत्तमा श्रुतिः ॥ २४७ ॥ ततस्तं स्नेहतः तस्याः मत्या सद्धः समालपत् । देव ! दृष्टा सम योगो
योग्योऽय भवतोऽभवत् ॥ २४८ ॥ यतो यथः कुलं शीलं रूपं च गुणयोः समम् । सर्वं पुण्यादभूत्प्रेमाय यो यत्नस्तु
केवलम् ॥ २४९ ॥ तद्बुद्धिः प्रियसेवाया बालिशः प्राह किं प्रियम् ? । सद्धेनोक्त यथा देव ! प्रियोऽस्या मधुरो
ध्वनिः ॥ २५० ॥ मया स एव सेव्यस्तत् बालिशेनेति भाषिते । हृष्टः सद्धोऽथ तं स्नेहाल्लालितो नियते इति
॥२५१॥ ततः स चेत्रुषीनादिनात्मानमवतः श्रुतिम् । लालयन् बालिशोऽजस्रं सुखिनं मन्यते स्वकम् । ॥२५२॥
त्यक्तं तेनापरं कृत्यं धर्म्मार्थं दूरतः स्थितः । पित्रप्रायतया ज्ञातो हास्यभासो विवेकिनाम् ॥ २५३ ॥ इतः
सदागम भोषे कोविदः किं हिता मम ? । भार्येयं सोऽभ्यधोचाथ ससङ्गेय हिता न हि ॥ २५४ ॥ इय हि
महिता पूर्वे रायकेन्द्ररिमन्त्रिया । इयं जगदशीकर्तुं पञ्चमानुपमप्यमा ॥ २५५ ॥ स च कर्म्मपरीणामभ्रातृभ्यो

रागकेशरी । प्रसिद्धश्चरटो लोके तस्यामात्यो विशेषतः ॥ ३५६ ॥ स कर्म्मपरिणामस्तु शुभाशुभकरो नृपः । इयं चरटकन्येति मत्वा नाङ्गीकरिष्यति । अयं लोके विश्वास्यतां यातस्ततश्चैवं स्थिते सति ॥ ३५७ ॥ निजं दत्त्वाग्रतो दासं सङ्गं संबन्धकारकम् । महाराजजनस्ततस्तेन रागकेशरिमन्त्रिणा ॥ ३५८ ॥ तेन ते न हिता हन्त भार्येयं भर्तृवञ्चिका । त्वया सुतात्वेन ख्यापितेयं श्रुतिः पुरा ॥ ३५९ ॥ युग्मम् ॥ इयं च नाधुना हातुं शक्या सङ्गस्तु तदस्या (ॱस्यां) विश्वस्यं न कदापि हि कोविद ! ॥ ३६० ॥ यदिष्टानिष्टशब्दानां श्रवणेऽपि न सर्वथा । हेयः सानेन हीना च ने सत्यपि हि दोपकृत् ॥ ३६१ ॥ मध्यस्था सङ्गहीनेयं भविता तव बाधिका ॥ ३६२ ॥ इत्थं सदागमगिरा स श्रुतिं श्रावयन्नपि । कोविद ! । एवं च ललमानौ तौ श्रुत्या कोविदबालिशौ । सङ्गत्यागशब्दान्सङ्गोज्झनाज्ज्ञे जने श्लाघ्यः सुखी तथा ॥३६३॥ अथास्ति बहिरङ्गोऽद्रिस्तावारूढौ तमन्यदा । तत्र दिव्यगुहारन्ध्रग्रहाज्जातौ सुखदुःखप्रपूरितौ ॥ ३६४ ॥ तदन्तः कैन्नरं युग्मं गान्धर्वं च परस्परम् । बद्धस्पर्द्धं समाध्यक्षं गीतं गातुं प्रचक्रमे मस्त्यदृष्टतलं जनैः ॥ ३६५ ॥ मधुरं च स्वरं श्रुत्वा तयोः कोविदबालिशौ । अद्रेः शिखरमारूढौ श्रुत्या गाढं प्रबोधितौ ॥ ३६७ ॥ ॥ ३६६ ॥ अथ चित्तस्थसङ्गेन बालिशेन श्रुतिः कृता । तच्छ्रुतौ तत्परा किञ्चिन्न रसाच्चेतयत्ययम् ॥ ३६८ ॥ ततः स तेन सङ्गेन स्ववीर्येण तथा कृतः । गण्डशैलसमो रन्ध्रे द्राक्कृत्य पतितो यथा ॥ ३६९ ॥ बृहदास्फोटपातेन तेन गन्धर्व-

१ सत्यपि न हि दो° ख० । २ लोके श्ला° ख० ।

किमराः । कुशलं वाछितं मधुप्वा संभूपावपिपुः क्षणात् ॥२७०॥ इतः सदागमादेशात् स्यक्तसङ्गः स कोविदः । तं तथा पीस्म वेगेनापक्रान्तो मिरिम्रमुता ॥ २७१ ॥ स धर्मघोषनामान गुरु प्राप्यामवन्मुनिः । कृतम् स्व परे तेन सोऽस्मात् कोविदो नृप! ॥ २७२ ॥ श्रुतिकथानकम् ॥ तस्मात् कुमित्रसङ्गः स्याद्बालिशस्येव दुःखकृत् । सदागमस्तु सुखकृपया मे पनवाहन ! ॥ २७३ ॥ तदाकर्ण्य मया ध्यातं महामोहपरिग्रहौ । विमोच्य कारयस्येष मां भयर्स्न सदागमे ॥ २७४ ॥ ततः किं करवाणीति ध्यायन्तं मामपोषत । अकलङ्को यथा पुर्द गुरोर्नास्य स्यथा न वा ? ॥ २७५ ॥ मया प्रोचे पृष्ठ पुर्व स प्राह क्रियतामिदम् । ततो मयाकलङ्केन सार्द्धं स्निग्धतया सुपम् ॥ २७६ ॥ प्रन्थिस्थानासभतया गुरोमापि प्रमापता । मत्पुपराक्षमस्माच भूयोऽप्यादि सदागमः ॥ २७७ ॥ पुग्मम् । मकान्तं प्रप्यवमैस्यपन्दनं दानमाहतम् । दूरीभूतौ च तौ किञ्चिन्महामोहपरिग्रहौ ॥ २७८ ॥ विहते परिणा साकमकलङ्केऽप तौ पुनः । आयातो मां ततमाह समस्तं कत्पमस्पजम् ॥ २७९ ॥ ततो मोमपिपासातः पीसहस्राण्यमेसपम् । संचिन्त्येम पनं मात्री विदधे निर्वनामहम् ॥ २८० ॥ पाप पथापरमपि तत्सर्वं विदधे मया । ततः सदागमो नष्टो रुष्टः पुण्योदयो मनाक् ॥ २८१ ॥ ततश्च मे महादेवी नाम्ना मदनसुन्दरी । मस्पन्तपक्षमा मद्रे । भृता शूलेन विह्वला ॥ २८२ ॥ समागतो महामोहप्रतिमागरकस्तदा । शोचये मत्या मर्हं च सं मामाश्लिषेत् तदामपा ॥ २८३ ॥ स्मृत्वा स्मृत्वा ततोऽन्नं तां विलपामि मुहुर्मुहुः । तच श्रुत्वा जनश्रुत्वाऽ-

१ ममत् ग० प० ।

कलङ्को मामुपागमत् ॥ ३८४ ॥ ततः मां महाभागो दृष्ट्वा शोकवशीकृतम् । विमुक्ताशेषसत्कृत्यं कृपयेदमभाषत ॥ ३८५ ॥ सर्वेऽमी जन्तवो नित्यं कृतान्तमुखकोटरे । वर्त्तन्तेऽतः क्षणं भूप ! यज्जीवन्ति तदद्भुतम् ॥ ३८६ ॥ स हि नापेक्षतेऽवस्थां प्रेमाबन्धनसुन्दर(°रा°)म् । दलयत्येव भूतानि मत्तवद्गन्धवारणः ॥ ३८७ ॥ इत्यादि देशनां तस्मिन् कुर्वाणेऽपि महात्मनि । सविलापमहं तारस्वरं रोदिमि शोकतः ॥ ३८८ ॥ मुनिर्मां पुनरप्याह यथा भो ! घनवाहन ! । न युक्तं बालवृत्तं ते मुञ्च शोकं स्थिरो भव ॥ ३८९ ॥ विस्मृतस्ते कथं साधुकथितोऽप्यधुना भवः । प्रदीपनापानकारघट्टचट्टमठोपमः ॥ ३९० ॥ इत्यादिभिरहं वाक्यैरकलङ्कस्य किञ्चन । सचेतनोऽभवं शोको महामोहमथावदत् ॥ ३९१ ॥ देव ! व्रजाम्यहं सोऽथ प्राहैवं कुरु किन्तु नौ । प्रतिजागरणं कार्यं केनापि भवतां ननु ॥ ३९२ ॥ तथेत्युक्त्वा गते शोके मया मेने मुनेर्वचः । ततः सदागमश्चक्रे मया हृदयवल्लभः ॥ ३९३ ॥ अकारयं जिनस्याथ बिम्बानि भवनानि च । यात्रास्नात्रपात्रदानादीनि प्रावर्त्तयं तथा ॥ ३९४ ॥ ततः कृतस्तावदेष निःशेषगुणभाजनम् । मयेति चित्ते संतुष्टः सोऽकलङ्कमहामुनिः ॥ ३९५ ॥ अत्रान्तरे कृतानुज्ञो रागकेशरिभूभुजा । परिग्रहस्नेहाद् बहुलिकाकृपणतायुतः ॥ ३९६ ॥ प्रतिजागरकोऽभ्यागान्महामोहस्य सागरः । तं दृष्ट्वा हृदि हृष्टौ च महामोहपरिग्रहौ ॥ ३९७ ॥ युग्मम् ॥ ततः कृपणताश्लेषान्मयाऽरक्षि धनव्ययः । चिन्तितं चाकलङ्कोऽयं कामं कारयति व्ययम् ॥ ३९८ ॥ तदत्र किं करोमीति ध्यायन्तं मां समाश्लिषत् । तदा बहुलिकाथाभूदीदृशी कुमतिर्मम ॥ ३९९ ॥ यत्प्रेषया-

ष्पकलङ्क यशोगुप्त्या कथाप्यहम् । येनाथ न भवेद् ग्रन्थप्रपञ्चोऽय स यथोदितः ॥ ४०० ॥ ममोपकारोऽभूत्
पूर्व्वः कल्पस्तेऽपि ततोऽन्यतः । पूर्व विस्तरतस्तु कथिष्ये भगवन्मया ॥ ४०१ ॥ तदाकर्ण्य ययौ मन्त्रे-
ऽकलङ्को गुरुसन्निधौ । ततोऽत्र सागरादेवास्तु नः सङ्ग परिग्रहे ॥ ४०२ ॥ ततः परिग्रहमोक्तः सागरो रक्षितो-
ऽस्म्यहम् । तया स्वतोऽपि मे प्राणदात्री कृपमतामयत् ॥ ४०३ ॥ येयं षड्गुलिकाप्येषा गाढं मदुपकारिणी ।
सोऽकलङ्को महाशत्रुर्दूरं निर्वासितो मया ॥ ४०४ ॥ एवं यद्वत्त्वं प्रोवाच महामोहः परिग्रहम् । वदथ सागरो
वत्स ! सर्वस्वं जीवितं च मे ॥ ४०५ ॥ मत्कृतं सर्वमस्त्यत्र भक्तोऽयं मयि सत्यतः । मत्पुत्रराज्ययोग्योऽयमथ ते
रक्षणक्षमः ॥४०६॥ एवं चोल्लासितस्तेन सागरो मम्मनूम्मत । ततोऽत्र पूर्वचक्रे ! सर्वं सत्कृत्यमस्त्यजम् ॥४०७॥
तथाकर्ण्याकलङ्केन यथोपायाऽपि याधुना । यामीति स्वयो विज्ञापितास्तेऽथ समभ्ययुः ॥ ४०८ ॥ वत्स !
ध्यर्थस्तव प्रश्नोऽत्र तावत् मनवाहने । यावदस्य समीपस्थौ महामोहपरिग्रहौ ॥ ४०९ ॥ आयान्ति च तयोः
पार्श्वे सर्वदा सागरादयः । ततोऽस्य कोपदेशः ! क धर्म्मः ! क च सदागमः ! ॥ ४१० ॥ बोधितस्यापि नो तस्य
संस्कारः कोऽपि ते पुनः । स्वाध्यायप्रवृत्तिर्वा स्यात् कुत तत्र भवेन तत् ॥ ४११ ॥ अकलङ्कस्ततोऽवादीत्
भवन्त्यस्य तपस्विनः । विरतोऽनर्थहेतुभ्यामाभ्यां भावी कदा पुनः ! ॥ ४१२ ॥ गुरुणोक्तं विज्ञानन्ति त प्रायेण
यथाख्याः । चारित्रधर्म्मराजस्य प्रसिद्धो यो महत्तमः ॥ ४१३ ॥ चारित्रधर्म्मयुक्तेन स्ववीर्येण विनिर्मिता ।
तेनास्ति मानसी कन्या विद्या नाम मनोहरा ॥ ४१४ ॥ तया चारित्रधर्म्मस्य विरतेः कृपिसंभवा । निरीक्षणा

नामधेया कन्यान्या विद्यतेऽनघा ॥ ४१५ ॥ यदा कर्म्मपरीणामदापिते ते उभे अपि। परिणेष्यति भाव्यस्य सहाभ्यां विरहस्तदा ॥ ४१६ ॥ अधुना तु प्रयासोऽयं सर्वस्तेऽस्मिन्निरर्थकः। गुरोर्वाक्यं तदाकर्ण्याकलङ्को मामशात्यजत् ॥ ४१७ ॥ अहं तु तौ समाश्रित्य महामोहपरिग्रहौ । आगत्यागत्य तद्भृत्यैरेकैकेन कदर्थितः ॥ ४१८ ॥ तैः सर्वैरपि संभूयानेकधा बाधितं ततः। मामयोग्य इति ज्ञात्वा गतो दूरं सदागमः ॥ ४१९ ॥ यथाभिमतकामांश्च सम्पादयति मे तदा। असौ पुण्योदयोऽहं तु विमूढस्तन्न लक्षये ॥ ४२० ॥ किञ्च भद्रे! महामोहमहत्तमवशादहम्। कुर्वे धर्म्मधिया हिंसादीन्यदीनः कुकर्मणि ॥ ४२१ ॥ कामान्धश्च पुरे यां यां पश्यामि मृगलोचनाम्। कुलीनामकुलीनां वा तां तां पत्नीं करोम्यहम् ॥ ४२२ ॥ ततः कुकर्म्मणा तेन विरक्ताः पौरबान्धवाः । ममावरजमालोच्य नाम्ना नीरदवाहनम् ॥ ४२३ ॥ मां निबध्याक्षिपन् घोरे चारके नारकोपमे। राज्ये संस्थापयामासुस्तं च भक्तिपुरःसरम् ॥ ४२४ ॥ युग्मम् ॥ हृष्टाः कुस्वामिनाशेन तुष्टाः सुस्वामिनो गुणैः । ते पौरसैनिका लोकास्ततः किं किं न कुर्वते ? ॥ ४२५ ॥ अहं तु चारके तत्र पुरीषमलपिच्छिले । क्षुधा क्षामोदरो बद्धश्चिरं तस्थौ सुदुःखितः ॥ ४२६ ॥ परिवारसमेतस्य महामोहस्य दोषतः। तथाप्यहं न निर्विण्णः संसारात् चारुलोचने ! ॥ ४२७ ॥ रौद्रध्यानपरस्याथ पूर्वा मे गुटिकाऽजरत्। ततो वितीर्णा सा मह्यं भवितव्यतयापरा ॥ ४२८ ॥ ततः पापिष्ठवासायां पूर्यां सप्तमपाटके। अहं तस्याः प्रभावेण जातः पापिष्ठरूपभृत् ॥ ४२९ ॥ त्रयस्त्रिंशत्सागरायुःपर्यन्ते भवितव्यता। कृत्वाथ

मत्स्यरूप मां पुनस्तत्रैव सानयत् ॥ ४२० ॥ एवं कालमनन्तं च महामोहवशस्तथा । मुक्त्वाऽसंख्यप्रहारं
वत् भ्रमितोऽत्र पुरेष्वहम् (?) ॥ ४२१ ॥ तथा परिभ्रमणाहं संज्ञया निजभार्यया । पुत्रेण बहुशो भद्रे ! योनौ योनौ
विडम्बितः ॥ ४२२ ॥ गृहकोकिलिकासर्पोन्दुरावाकारभुग् मतः । इतो निधानमासाद्य तमाद्धे विह्वलो मृतः
॥ ४२३ ॥ ममैव भ्रमतो भद्रे ! प्रसभा भवितव्यता । भ्रान्ता इव महामोहादयश्च क्षयतामगुः ॥ ४२४ ॥ ततो
मनुजगत्यन्तः पाटके भरताभिधे । साकेतेऽहं पुरे नीतो भवितव्यतयान्यदा ॥ ४२५ ॥ वणिगस्तत्र नन्दस्य
तनयः गुटिकावशात् । भार्यायां धनसुन्दर्यां सुतो नाम्नाऽमृतोदरः ॥ ४२६ ॥ मयाथ यौवनस्थेन वने साधुः
सुदर्शनः । इतो देवनया चास्य पुनः प्राप्तः समागमः ॥ ४२७ ॥ जातोऽत्र श्रावकाकारधारको द्रव्यतस्तदा ।
नीतोऽथ गुटिकायोगात् नगरे विबुधालये ॥४२८॥ तस्मिंश्च भवनव्यन्तरज्योतिष्कल्पवासिनः । पाटकेषु वसन्त्येते
विबुधाः कुलपुत्रकाः ॥ ४२९ ॥ दशाष्टपञ्चभेदास्ते त्रयः पूर्वे यथाक्रमम् । कल्पस्यास्तवतीताश्च द्विभेदास्तुर्यपाटके
॥ ४४० ॥ कल्पस्था द्वादशावाससंस्थिताः सपरिच्छदाः । नवपञ्चनिवासस्थास्तदतीताः प्रकीर्तिताः ॥ ४४१ ॥
तत्राद्ये पाटके भद्रे ! जातोऽत्र भावनस्तदा । आद्यमेदस्थितेष्वेव विबुधः कुलपुत्रकः ॥ ४४२ ॥ ततश्च तत्र
पद्माक्षि ! विस्मृत्याहं सदागमम् । सार्धपल्योपमायुष्को लीलयावस्थितः सुखम् ॥ ४४३ ॥ तदन्ते गुटिकां
दत्त्वा भवितव्यतया तया । नगरे मानवावासे प्रापितः पुनरप्यहम् ॥ ४४४ ॥ तत्रास्ति बन्धुदत्तस्य
वणिजः प्रियदर्शना । भार्या तस्याः सुतत्वेन जातोऽहं च सुनामकः ॥ ४४५ ॥ यौवनस्थो मुनेः प्राप्य सुन्द

राख्यात्सदागमम् । जातश्चाहं तदा भद्रे ! श्रमणो भाववर्जितः ॥ ४४६ ॥ ततस्तदनुभावेन गतो व्यन्तरपाटके । न नीतो विस्मृतत्वेन किन्तु तत्र सदागमः ॥ ४४७ ॥ मयैवं भवचक्रेऽत्र भ्राम्यता दयिताज्ञया । अयं सदागमो दृष्टो विस्मृतश्च पुनः पुनः ॥ ४४८ ॥ अनन्तवाराः श्राद्धश्च यतिश्च द्रव्यतोऽभवम् । पुनः सदागमत्यागात् प्राप्ता नाना विडम्बनाः ॥ ४४९ ॥ कुतीर्थिकोऽपि जातोऽहं भवचक्रेऽत्र भूरिशः । कर्म्मस्थितिः क्वचिद्दीर्घा क्वचिदल्पा बभूव च ॥४५०॥ क्वचिच्च प्रबला जाता महामोहादिशत्रवः । क्वचित्सदागमो जातः प्रबलस्तन्निवारकः ॥ ४५१ ॥ ततश्चानन्तवाराभिरभ्यस्तेऽस्मिन्सदागमे । सा मनाग् निर्म्मलीभूता चित्तवृत्तिर्महाटवी ॥ ४५२ ॥ ततश्चारित्र-धर्मेण सद्बोधामात्यवाक्यतः । प्रहितो मेऽन्तिके सम्यग्दर्शनाख्यो महत्तमः ॥ ४५३ ॥ तेनोक्तं देव ! विद्येयं नीयतां कन्यका मया । तस्य संसारिजीवस्य प्राभृतं तोषहेतवे ॥ ४५४ ॥ सद्बोधः प्राह नाद्यापि प्रस्तावोऽस्या महत्तम ! । त्वद्रूपे तात्त्विके ज्ञाते किन्तु भावी तदस्त्वसौ ॥ ४५५ ॥ यदा स्यात्तेन विज्ञातं रूपं तव परिस्फुटम् । तदाहमागमिष्यामि विद्यामादाय तेऽन्तिके ॥ ४५६ ॥ अविद्येऽपि त्वयि गते मित्रवृद्धिरिपुक्षयौ । भाविनाविति सद्बोधेनोक्तोऽचालीन्महत्तमः ॥ ४५७ ॥ इतश्चाहं तदा भद्रे ! नगरे जनमन्दिरे । सुनुरानन्दनन्दिन्योर्जातो नाम्ना विरोचनः ॥ ४५८ ॥ यौवनस्थोऽगमं चित्तनन्दने काननेऽन्यदा । धर्म्मघोषं गुरुं तत्र विलोक्याहं ननाम च ॥ ४५९ ॥ ततश्च प्रतनूभूतमहामोहादिवैरिकः । निषण्णोऽहं पुरस्तस्य तेन चक्रे च देशना ॥ ४६० ॥ सुदुर्लभमिदं प्राप्य मर्त्यजन्म सुमेधसा । तत्रापि शासनं जैनमर्ज्जनीयं परं पदम् ॥ ४६१ ॥ तां चाकर्णयतः प्रत्यक्षीभूतो

मत्स्यरूप भो पुनस्त्वमैव सानयत् ॥ ४३० ॥ एवं कालमनन्तं च महामोहवशस्तया । मुक्त्वाऽसंख्यव्यवहारं तत्र भ्रमितोऽहं पुरेश्वरम् (?) ॥ ४३१ ॥ तथा परिग्रहेणाहं संज्ञया निजभार्यया । पुत्रेण मदुक्तो भद्रे ! योनौ योनौ विडम्बितः ॥ ४३२ ॥ गृहकोकिलिकासर्पोन्दुराद्याकारभृत् यतः । इतो निधानमासाद्य तत्राशे विह्वलो मृतः ॥ ४३३ ॥ ममैव भ्रमतो भद्रे ! प्रसभा भवितव्यता । भ्रान्ता इव महामोहादयश्च कश्चनागुः ॥ ४३४ ॥ ततो मनुजमस्यन्तः पाटके भरताभिधे । साकेतेऽहं पुरे नीतो भवितव्यतयान्यदा ॥ ४३५ ॥ वणिजस्तत्र नन्दस्य कृतश्च गुटिकावशात् । भार्यायां धनसुन्दर्यां सुतो नाम्नाऽमृतोदरः ॥ ४३६ ॥ तथाथ यौवनस्थेन वने साधुः सुदर्शनः । इतो देशनया चास्य पुनः प्राप्तः सदागमः ॥ ४३७ ॥ जातोऽहं श्रावकाकारधारको द्रव्यतस्तदा । नीतोऽथ गुटिकायोगात् नगरे विबुधालये ॥४३८॥ तस्मिंश्च भवनव्यन्तरज्योतिष्कल्पवासिनः । पाटकेषु वसन्त्येते विबुधाः कुलपुत्रकाः ॥ ४३९ ॥ दशाष्टपञ्चभेदास्ते त्रयः पूर्वे यथाक्रमम् । कल्पस्थास्तदतीताश्च द्विभेदास्तुर्यपाटके ॥ ४४० ॥ कल्पस्था द्वादशावाससंस्थिताः समुदाहृताः । नवपञ्चनिवासस्थास्तदतीताः प्रकीर्तिताः ॥ ४४१ ॥ तत्रापि पाटके भद्रे ! जातोऽहं भावनस्तदा । आद्यभेदस्थितेष्वेव विबुधः कुलपुत्रकः ॥ ४४२ ॥ ततश्च तत्र पर्याधि ! विस्मृत्याहं सदागमम् । सार्धपल्योपमायुष्के लीलयावस्थितः सुखम् ॥ ४४३ ॥ तदन्ते गुटिकां दत्त्वा भवितव्यतया तया । नगरे मानवावासे प्रापितः पुनरप्यहम् ॥ ४४४ ॥ तत्रास्ति बन्धुदत्तस्य वणिजः प्रियदर्शना । भार्या तस्याः सुतत्वेन जातोऽहं च पुनामकः ॥ ४४५ ॥ यौवनस्थो मुनेः प्राप्य सुन्द

राख्यातसदागमम् । जातश्चाहं तदा भद्रे ! श्रमणो भाववर्जितः ॥ ४४६ ॥ ततस्तदनुभावेन गतो व्यन्तरपाटके । न नीतो विस्मृतत्वेन किन्तु तत्र सदागमः ॥ ४४७ ॥ मयैवं भवचक्रेऽत्र भ्राम्यता दयिताज्ञया । अयं सदागमो दृष्टो विस्मृतश्च पुनः पुनः ॥ ४४८ ॥ अनन्तवाराः श्राद्धश्च यतिश्च द्रव्यतोऽभवम् । पुनः सदागमत्यागात् प्राप्ता नाना विडम्बनाः ॥ ४४९ ॥ कुतीर्थिकोऽपि जातोऽहं भवचक्रेऽत्र भूरिशः । कर्म्मस्थितिः क्वचिद्दीर्घा क्वचिदल्पा बभूव च ॥४५०॥ क्वचिच्च प्रबला जाता महामोहादिशत्रवः । क्वचित्सदागमो जातः प्रबलस्तन्निवारकः ॥ ४५१ ॥ ततश्चानन्तवाराभिरभ्यस्तेऽस्मिन्सदागमे । सा मनाग् निर्म्मलीभूता चित्तवृत्तिर्महाटवी ॥ ४५२ ॥ ततश्चारित्र धर्मेण सद्बोधामात्यवाक्यतः । प्रहितो मेऽन्तिके सम्यग्दर्शनाख्यो महत्तमः ॥ ४५३ ॥ तेनोक्तं देव ! विद्येयं नीयतां कन्यका मया । तस्य संसारिजीवस्य प्राभृतं तोषहेतवे ॥ ४५४ ॥ सद्बोधः प्राह नाद्यापि प्रस्तावोऽस्या महत्तम ! । त्वद्रूपे तात्त्विके ज्ञाते किन्तु भावी तदस्त्वसौ ॥ ४५५ ॥ यदा स्यात्तेन विज्ञातं रूपं तव परिस्फुटम् । तदाहमागमिष्यामि विद्यामादाय तेऽन्तिके ॥ ४५६ ॥ अविद्येऽपि त्वयि गते मित्रवृद्धिरिपुक्षयौ । भाविनाविति सद्बोधेनोक्तोऽचालीन्महत्तमः ॥ ४५७ ॥ इतश्चाहं तदा भद्रे ! नगरे जनमन्दिरे । सुनुरानन्दनन्दिन्योर्जातो नाम्ना विरोचनः ॥ ४५८ ॥ यौवनस्थोऽगमं चित्तनन्दने काननेऽन्यदा । धर्म्मघोषं गुरुं तत्र विलोक्याहं ननाम च ॥ ४५९ ॥ ततश्च प्रतनूभूतमहामोहादिवैरिकः । निषण्णोऽहं पुरस्तस्य तेन चक्रे च देशना ॥ ४६० ॥ सुदुर्लभमिदं प्राप्य मर्त्यजन्म सुमेधसा । तत्रापि शासनं जैनमर्जनीयं परं पदम् ॥ ४६१ ॥ तां चाकर्णयतः प्रत्यक्षीभूतो

मे सदागमः । ततो मया मुनिः प्रोक्तो यन्मे कृत्यमादिश ॥ ४६२ ॥ मुनिराह त्वया भद्राधधीर्यो मन्त्रविस्तरः ।
आराध्यः परमात्मा च वन्दनीयाः सुसाधवः ॥ ४६३ ॥ आगतो नवतत्त्वानि प्रतिपद्यानि सर्वदा । हेयं च कुमत
स्थेयं निर्मलेन सदागमे ॥ ४६४ ॥ एवं चोपदिशत्युच्चैर्धर्म्मघोषगुरौ तदा । स मामुपाययौ सम्यग्दर्शनाख्यो
महत्तमः ॥ ४६५ ॥ निरीक्षितः कर्म्मग्रन्थिभेदद्वारा मयाथ सः । ततः स्वरुच्या भद्रान संजात मुनिवाचि मे
॥ ४६६ ॥ महत्तम चमुकुत्सा प्रणामिहितो मुनिः । नाथो यदाज्ञापयति करिष्येऽहं तदेव हि ॥ ४६७ ॥
इत्युदित्वा च नत्वा च तं मुनिं स्वगृहं गतः । ततः प्रभृति जातश्च सम्यग्दर्शनसंयुतः ॥ ४६८ ॥ तत्त्वश्रद्धान
पूतात्मा विशिष्टज्ञानवर्जितः । जिनेन्द्रगदितं सत्यमिति मन्ये च सूक्ष्मम् ॥ ४६९ ॥ न संजातास्तदा
सूक्ष्मविविक्तज्ञानहेतवः । गुरवः पटुवाचोऽपि विना मे निजयोग्यताम् ॥ ४७० ॥ यतः स्वयोग्यतैव स्यात् सदा
नज्ञानकारणम् । गुरवः केवलं तस्यां भवन्ति सहकारिणः ॥ ४७१ ॥ पल्योपमपृथक्त्वे च क्षीणे कर्म्मस्थितेस्तदा ।
गृहिधर्म्मो मया दृष्टः सामान्यो न विशेषतः ॥ ४७२ ॥ तदादेशात्पालितानि व्रतान्येतत्प्रभावतः । कल्पवासिषु
नीतोऽहं भार्यया विबुधालये ॥४७३॥ जातश्च प्रथमे कल्पे तेजसा भासुरः सुरः । तत्र चातिसुखी किञ्चिदूनमल्प
हर्षे स्थितः ॥ ४७४ ॥ तदन्ते मानवावासमानीय विहितस्तया । आभीरोऽहं कलन्दाख्यः सूनुर्मदनरेखयोः
॥ ४७५ ॥ तदा च विस्मृतौ तौ मे सदागममहत्तमौ । विस्मृतो गृहिधर्म्मोऽपि न स्यात्ताभ्यां विना हि सः
॥ ४७६ ॥ पूर्वाभ्यासात्परं पापभीरुर्भद्रकभावभाक् । ज्योतिष्मारिषु नीतोऽहं गुटिकायोगतस्तया ॥ ४७७ ॥ तत्र

स्थितेन दृष्टौ च महामोहपरिग्रहौ । मया तौ विस्मृतौ तेन महत्तमसदागमौ ॥ ४७८ ॥ ततोऽन्यगुटिकादानात् कृतोऽहं भार्यया तया । पञ्चाक्षपशुसंस्थाने दर्दुराकारधारकः ॥ ४७९ ॥ ततः परं पुनर्भूरि भ्रमयित्वा स्वभार्यया । नीतोऽहं मानवावासे पुरे काम्पिल्यनामके ॥ ४८० ॥ धराया वसुबन्धोश्च वासवाख्यः सुतः कृतः । सूरेः शान्त्यभिधाल्लेभे महत्तमसदागमौ ॥ ४८१ ॥ ताभ्यां परिचयाज्जाता महामोहादयः कृशाः । ईशानेऽथाभवं स्मृतसदागममहत्तमः ॥ ४८२ ॥ पुनर्मनुजगत्यन्तर्मोहतो विस्मृताविमौ । इत्थं संख्यातिगा वारा जातं मम सुलोचने ! ॥ ४८३ ॥ श्राद्धत्वे श्रमणत्वे च यत्र यत्र विलोकितः । महत्तमः पुनर्दृष्टस्तत्र तत्र सदागमः ॥ ४८४ ॥ गृहिधर्मोऽपि तन्मूले दृष्टः सामान्यरूपतः । क्वचित् क्वचिन्न दृष्टोऽपि स महत्तमपार्श्वगः ॥ ४८५ ॥ तदेते बहुशो दृष्टास्त्रयोऽपि वरबान्धवाः । जाताश्च सुखदातारो विमुक्ताश्चान्तरान्तरा ॥ ४८६ ॥ दृष्टश्च केवलोऽप्येषोऽनन्तवाराः सदागमः । न त्वनेन विना दृष्टः स सम्यग्दर्शनः क्वचित् ॥ ४८७ ॥ अन्यच्च यत्र यत्राभूत्समीपे मे महत्तमः । तत्र तत्र सखा पुण्योदयोऽभूत्सुखदो मम ॥ ४८८ ॥ यत्र यत्र पुनर्जाताः प्रबला भावशत्रवः । नष्टे पुण्योदये तत्र तत्राप्ता दुःखपद्धतिः ॥ ४८९ ॥ कियद्वा कथ्यते तन्वि ! विशेषस्त्वेष कथ्यते । स सम्यग्दर्शनो मिथ्यादर्शनेन हतः क्वचित् ॥ ४९० ॥ ज्ञानसंवरणेनापि दूरं नीतः सदागमः । मदीयपक्षपाताच्च तौ ताभ्यां निर्जितौ क्वचित् ॥ ४९१ ॥ अन्यदा मानवावासे पुरे सोपारकाभिधे । नीतोऽगृहीतमङ्केते ! भवितव्यतया तया ॥ ४९२ ॥ वणिजः शालिभद्रस्य भार्यास्ति कनकप्रभा । जातस्तस्या अहं सूनुस्तत्र नाम्ना विभीषणः ॥ ४९३ ॥

अथ धरिं सुधाभूविमासाद्य क्षुमकानने । पुनर्दृष्टौ मया भद्रे ! महत्तमसदागमौ ॥ ४९४ ॥ तस्मभद्रानसम्पन्नो
मायतो विरतिं विना । जातो गुरूपरोधेन ममनोऽयं तवानघे ! ॥ ४९५ ॥ अन्यदा कर्मदोषान्मे वैमाम्य
नितरं मनः । मभूत्प्रचलतां प्राप्ता महामोहादयस्ततः ॥ ४९६ ॥ तदा द्वेषादेतौ वा जातोऽहं परनिन्दकः । निन्दा
म्यहं स्तुव संघमपि तीर्थकरानहम् ॥ ४९७ ॥ एवं च यतिवेषोऽपि पापोऽहं गुणदूषकः । महामोहवशाज्जातो
मिथ्यादृष्टिः सुदारुणः ॥ ४९८ ॥ मयाथ भ्रमता भायदिशन ममचककम् । ठेपार्द्धपुद्गलपरावर्तस्य परिपूरितम्
॥ ४९९ ॥ एवं वदति संसारिजीवे विस्मितमानसा । ज्ञाताऽगृहीतसङ्केता किञ्चिद्भावार्थकोविदा ॥ ५०० ॥
तथा प्रज्ञाविशालापि श्रुत्वा तथास्य वचः । अत्यन्तभावसंवेगा व्यचिन्तयदिति स्फुटम् ॥ ५०१ ॥ अहो !
संसारिजीवस्य महामोहपरिग्रहौ । मन्येऽहं सर्वपापेभ्यः सकाशादतिदारुणौ ॥ ५०२ ॥ क्रोधादिभिर्गुणस्यास्य
यतोऽनर्थततिः कृता । आभ्यां पुनरसौ सर्वा सम्यग्दर्शनमीलके ॥ ५०३ ॥ किञ्च सर्वमयो मोहो लोभेशश्च परिग्रहः ।
यदेतौ गुणघाताय सर्वेषां मूलनायकौ ॥५०४॥ तथापि न स्वमस्येतौ मनोऽद्य बोधितोऽपि हि । श्रुतो च कोपि
तास्यावदोषाणामपि रज्यते ॥५०५॥ ततः प्रज्ञाविशालां तां गाढ संवीक्ष्य भाषिताम् । स भव्यपुरुषोऽवादीदम्ब !
किं चिन्तितं त्वया ? ॥५०६॥ तयोक्तं पुत्र ! ते पश्चात् कथयिष्येऽधुना पुनः । सावधानः शृणु कथां यस्तस्या
स्याबहिष्यते ॥ ५०७ ॥ ततस्तूष्णीस्थिते तत्र राजपुत्रे स सादरम् । संसारिजीवः प्रोवाच शेषामात्मकथा

१ यथा° ग० । २ ममेषश्च स० । ३ °रात्म्यात्म्यमुना ता० ।

मिति ॥ ५०८ ॥ अन्यदा भार्यया नीतो जातोऽहं भद्रिले पुरे । सुतः स्फटिकराजस्य विशदो विमलाङ्गभूः
॥ ५०९ ॥ सुप्रबुद्धमुनेः प्राप्य सदागममहत्तमौ । गृहिधर्मयुतौ भद्रे ! पालिताश्च व्रतादयः ॥ ५१० ॥ पुण्यो
दयस्य माहात्म्यादथ कल्पे तृतीयके । नीतः शब्दादिसौख्येन स्थितः सागरसप्तकम् ॥ ५११ ॥ बन्धुत्रययुतेनेत्थं
द्वादशापि विलोकिताः । प्रत्येकं ते मया कल्पाः स्वल्पेतरसुखाश्रयाः ॥ ५१२ ॥ ततो द्वादशकल्पस्थो मानवा-
वाससंमुखम् । प्रस्थानं कारितो भद्रे ! भवितव्यतया तया ॥ ५१३ ॥ इति घोरविपाकमवेत्य जना ! घनवाहन-
बालिशवृत्तमिदम् । घनमोहपरिग्रहशब्दमतिं त्यजतास्ति शिवं यदि वोऽभिमतम् ॥ ५१४ ॥

इति श्रीश्रीचन्द्रसूरिशिष्यश्रीदेवेन्द्रसूरिविरचिते उपमितिभवप्रपञ्चाकथासारोद्धारे मोहपरिग्रहश्रवणेन्द्रिय-
विपाकवर्णनो नाम सप्तमः प्रस्तावः समाप्तः ।



# अष्टमः प्रस्तावः

इतोऽस्ति मानवावासे वासवेश्म श्रियः परम् । सप्रमोदजनाकीर्णं सप्रमोदाभिधं पुरम् ॥ १ ॥ विलसद्गुण-
रत्नाढ्या राजासादितवृद्धयः । जना यत्र महाभोगाः संश्रयन्ति न दीनताम् ॥ २ ॥ प्रत्यनीकमहानीकचनम-

---

१ कल्पा एव चावस्थिते सति क० ख० ग० घ० ।

अनवारणः । बभूव भूपतिस्तत्र नामतो मधुवारणः ॥ ३ ॥ यशोराशिप्रतापाभ्यां सुवर्णरुचिरः स्थिरः । मुख्य यः
शुशुभे पुष्पदन्ताभ्यां सुरशैलवत् ॥ ४ ॥ मन्दास्यहास्यदाक्षिण्यशीलादिगुणमालिनी । बभूव भूभुजस्तस्य देवी
नाम्ना सुमालिनी ॥ ५ ॥ अथागृहीतसङ्केते ! तस्याः कुक्षौ प्रवेशितः । सार्धं पुण्योदयेनाहं भवितव्यतया
तया ॥ ६ ॥ निष्क्रान्तश्च ततः काले पुण्योदयसमन्वितः । जन्मोत्सवं च पितरौ कारयामासतुर्मुदा ॥ ७ ॥
गुणधारण इत्याख्यां बिभ्राणः पितृकल्पिताम् । धात्रीभिः पाल्यमानोऽहं क्रमेण ववृधे ततः ॥ ८ ॥
इतो राज्ञा विशालाख्यः सगोत्रो मन्त्रितः सुहृत् । तत्राभूत्तनयश्चास्य कुलन्धर इतीरितः ॥ ९ ॥ आवामथ
मिथः स्निग्धौ सह क्रीडितवर्धितौ । सहाधीतौ च रुचिरं तारुण्यं प्रापि च क्रमात् ॥ १० ॥ अपरेद्युः पुराद्
दूरे पुरा चटु निवेशिते । आवां क्रीडितुमुद्याने गतावाह्लादमन्दिरे ॥ ११ ॥ ततस्तत्रावयोर्दूरवर्तिनि चूततरो
स्तले । योषितोर्द्वितयं किञ्चिद् दृष्टिगोचरमाययौ ॥ १२ ॥ तत्रैका निजरूपास्तकामकान्ता मृगेक्षणा ।
मां भ्रूलताधनुर्मुक्तैः कटाक्षविशिखैरताडयत् ॥ १३ ॥ ततस्तां तादृशीं वीक्ष्य निर्मिथ्यप्रेमनिर्भराम् । दध्यावहमियं किं
श्रीः ? किं रतिः ? किं सुराङ्गना ? ॥ १४ ॥ एवं चिन्तयतस्तस्यामत्यन्तमनुरागिणः । कुलन्धरेण मे तेनाभि
प्रायः समलक्ष्यत ॥ १५ ॥ ततोऽहं लज्जया चावरक्षोभ्याकारसंवरम् । स मां तावदभाषिष्ट कलाकौशलकोविदः
॥ १६ ॥ कुमार ! युवती वेत्ति क्रीडितं मन्मथेऽधुना । वेषमन्यच मया प्रोचे क्रियतां भाति यत्र ॥ १७ ॥ गत्वा
गेहमथावाभ्यां विदधे दिवसोचितम् । मया विभावरी सा च कथमप्यतिलङ्घिता ॥ १८ ॥ प्रातः कुलन्धरेणाथ

समेतस्तां मृगीदृशम् । दिदृक्षुः पुनरुद्याने तत्रागच्छं समुत्सुकः ॥ १९ ॥ न वीक्षिता परं तत्र बहुधान्वेषितापि सा । भद्रे ! ततोऽहमत्यन्तं चित्तोद्वेगेन पीडितः ॥ २० ॥ ततोऽहं चूतवृक्षं तं वीक्ष्यमाणो मुहुर्मुहुः । कुलन्धरयुतो यावन्निषण्णस्तस्य भूतले ॥२१॥ तावत्तस्या द्वितीयासीदायाता या तयान्विता । नार्येका मध्यमावस्था सुन्दराङ्गी समागमत् ॥२२॥ अभ्युत्थानादिनावाभ्यां विहितस्वागता ततः । दत्ताशिषमभाषिष्ट साऽऽवां मधुरया गिरा ॥२३॥ युवाभ्यां सह वक्तव्यं किञ्चिदस्ति वराननौ ! । निषद्य श्रूयतां तस्मात्ततः सर्वेऽप्युपाविशन् ॥ २४ ॥ ततः सा मां समुद्दिश्य प्रोचे वत्स ! निशम्यताम् । अस्ति विद्याधरावासो वैताढ्यो नाम पर्वतः ॥ २५ ॥ तत्र गन्धसमृद्धाख्ये पुरे खेचरचक्र्यभूत् । कनकोदराख्यः कामलताख्या तस्य देव्यहम् ॥ २६ ॥ उपयाचितकाद्यैश्च कृच्छ्राद् वयसि मध्यमे । दुहितैकावयोर्जज्ञे नाम्ना मदनमञ्जरी ॥ २७ ॥ पितृप्रियपत्तिनरसेनवल्लरिकासुता । तस्याश्च समभूदिष्टा सखी लवलिकाभिधा ॥२८॥ सौन्दर्येण कलाभिश्चापश्यन्ती स्वोचितं वरम् । पुरुषद्वेषिणी वत्सा साभूदुद्यौवनाप्यथ ॥२९॥ ज्ञात्वा लवलिकाख्यानात्तचाहं तत्पितापि च । विषण्णौ नितरां कार्या कथमेषेति चिन्तया ॥ ३० ॥ प्रत्युत्पन्नमतिर्भूपः स्वयंवरणमण्डपम् । अकारयदथाकार्य सर्वान् विद्याधरेश्वरान् ॥३१॥ न कोऽपि खेचरस्तस्यास्तत्रापि रुरुचे परम् । प्रत्युत श्लाघितेष्वेषु शिरोर्त्तिरभवद् भृशम् ॥ ३२ ॥ विलक्षाः खेचराः सर्वे तस्या अनभिरोचनात् । प्रद्वेषं दधतो राज्ञि गृहीत्वैकां दिशं ययुः ॥ ३३ ॥ शोकातिरेकादस्माकमतीतं कथमप्यथ । तद्दिनं निशि चोर्वीशः

१ °रास्ते च तस्या क० ख० ग० घ० ।

प्राप निद्रां न चिन्तया ॥३४॥ निशान्ते कथमप्याप्तनिद्रः स्वप्नेऽथ दृष्टवान् । मातङ्गपाणि स पश्चात्ते द्वौ नरौ द्वे च योषितौ ॥ ३५ ॥ तैः प्रोचे शृणु राजेन्द्र ! विषादं पूर्वमेव यत् । आस्ते मदनमञ्जर्या वरोऽस्माभिर्निरूपितः ॥३६॥ ततो भावी स एतस्याः किमन्यवरमार्गणैः ? । अस्माभिरत एतस्या ह्यम्यास्ते खेचराः कृताः ॥ ३७ ॥ एवं तानि श्वापानि पशुमस्तुरगोचरम् । अत्रान्तरे पपाठैव प्रातर्मङ्गलपाठकः ॥ ३८ ॥ विषादस्पर्शौ मा कदमुदयादिक्रमो यतो । सर्वसामान्य इत्येव ध्वंसतीयोदयन् रविः ॥ ३९ ॥ तदाकर्ण्य प्रबुद्धोऽथ स स्वप्न तत्र चन्दिनः । एक विचार्य समभूद्भूमिपालो निराकुलः ॥४०॥ इतश्च किं विचारैण्यमिदानीमिति निर्जने । उदिता लवलिकया प्रोचे मदनमञ्जरी ॥४१॥ यथादिशति मां तातो माता च तदहं मदीम् । भ्रान्त्वा वरं श्रेयोम्यारभतश्चितं स्वयमेव हि ॥४२॥ ततो लवलिका तस्यास्तद्वचो मन्त्रिमास्यत । मयापि नरनाथाय तच्छ्रुत्वा सोऽप्यचिन्तयत् ॥ ४३ ॥ वरसया मन्त्रित साध्वेवत्तरस्यायमेव यत् । तस्य देवोपदिष्टस्य लाभोपायो भविष्यति ॥ ४४ ॥ ध्यात्वेत्यनुमता राज्ञा ततो लवलिकान्विता । वरार्थं निर्ययौ वत्सा समस्तां क्षितिमीक्षितुम् ॥ ४५ ॥ कतिचिद्दिवसान्ते च समेत्यैषा विषादमाह । व्यजिज्ञपत् लवलिका नृप मां च समाकुला[1] ॥ ४६ ॥ निर्गत्यावामितस्तावन्नानावृतान्तसंकुलम् । पश्यन्त्यौ भूतलं भूरि सप्रमोदपुरं गते ॥ ४७ ॥ ततस्तत्र हिराहारमन्दिरं नाम काननम् । पश्यावः कौतुकम पापापदानां नमःस्थिते ॥ ४८ ॥ तावदेकत्र मारामौ दृष्टौ राजसुतावुभौ । तयोरेक प्रियसखी वीक्ष्य कामवशं

१ समाकुलम् क० स० म० प० ।

ययौ ॥ ४९ ॥ मया सह महीपीठमवतीर्याथ सा स्थिता । तयोर्दृग्गोचरे चूतवने दूरस्थिते मनाक् ॥ ५० ॥ तमेव राजपुत्रं सा पश्यन्त्यनिमिषेक्षणा । यावत्तत्संमुखं दृष्टिस्तावत्तेनापि पातिता ॥ ५१ ॥ ततः सामृतसिक्तेव क्षिप्तेव सुखसागरे । भजन्ती विविधान् भावान्परं हर्षमुपाययौ ॥ ५२ ॥ ततस्तां तादृशीं दृष्ट्वा हृष्टया चिन्तितं मया । अहो ! दुष्करतोषापि यूनेय तोषितामुना ॥ ५३ ॥ अहो ! अस्य सुरूपत्वमहो ! लावण्यपूर्णता । अहो ! युक्तोऽनयोर्योगो रतिमन्मथयोरिव ॥ ५४ ॥ अहो ! घटितमेवेदं मिथुनं ननु वेधसा । सद्भावमीलनादेवं तन्नः सिद्धं समीहितम् ॥ ५५ ॥ इतः स सुहृदा सार्द्धं ततः स्थानाद्ययौ युवा । ततो नष्टनिधानेव सा बालाजनि विह्वला ॥ ५६ ॥ मया प्रोचेऽथ सा भर्तृदारिके ! रुचितो यदि । तवायं तरुणस्ताताम्बान्तिके गम्यतां ततः ॥ ५७ ॥ सप्रमोदपुरेशस्य मधुवारणभूपतेः । अस्यैवायं सुतो भावी रूपमीदृक् कुतोऽन्यथा ? ॥ ५८ ॥ तातेनात्मा ततोऽमुष्मै दाप्यतामविलम्बितम् । तयाप्यूचे लवलिके ! रुचितोऽयं जनो मम ॥ ५९ ॥ साशङ्कं किन्तु मच्चित्तं यदहं रुचिता नहि । प्रायेणास्मै कथमपक्रमणं तूर्णमन्यथा ॥ ६० ॥ मयोक्तं सखि ! मा मैवं वोचः किं न स राजभूः । त्वां निरैक्षिष्ट ? दृष्ट्वा वा किं न जातः प्रमोदभाक् ? ॥ ६१ ॥ अपक्रान्तोऽपि वैदग्ध्यात् ततोऽस्मै रुचितास्यलम् । विमुच्य तस्मादाशङ्कां विधेहि मम भाषितम् ॥ ६२ ॥ स्वस्थीभूताथ सा किञ्चिन्मामूचे सखि ! सर्वथा । न पारयाम्यहं गन्तुमस्वस्थं मे वपुर्यतः ॥ ६३ ॥ मयेदं न च मोक्तव्यमुद्यानं भवती ततः । गत्वा संपादयत्वाशु वार्त्तां ताताम्बयोरिमाम् ॥ ६४ ॥ तन्निर्बन्धं परिज्ञाय गुप्तद्रुगहनान्तरे ।

दीवपङ्कजसम्पायां स्थापिता सा मया ततः ॥ ६५ ॥ विरूपाचरणेऽन्यत्र याने च क्षपयानय । तां विधाप्या हमापाता क्षिपतामधुनोषितम् ॥ ६६ ॥ तच्छ्रुत्वा मां नृपः प्राह देवि ! त्वं सत्वरं व्रज । संधीरयाय वत्सायाः यथाप्येष्याम्यहं पुनः ॥ ६७ ॥ साशङ्के मे पतत्यिव सकोपाः खेचरा ययुः । तदूपान्त मया ज्ञातु प्रयुक्तमतुलोऽस्ति च ॥ ६८ ॥ ततो विधाय सामग्रीं किञ्चिदादाय दोकनम् । पृष्ठतोऽत्र समेष्यामि देवी तु व्रजतु द्रुतम् ॥ ६९ ॥ स्वीकृत्याथ तदादेशं ज्ञात्वा लवलिकामिमाम् । तथा चवलिकां दासीं वेगेनात्राहमागता ॥ ७० ॥ तत्रैव शून्यविधाय दृष्टा मदनमञ्जरी । तया चालयितास्तस्या निषण्णा चपमन्तिके ॥ ७१ ॥ समागतेयमम्बात्र किमेवं सखि ! तिष्ठसि ? । इत्युक्ते लवलिकया साथ सम्प्राप चेतनाम् ॥ ७२ ॥ ससंभ्रममथोत्थाय सापतत्पदयो र्मम । दत्ताशिषं मयोत्थाप्य गाढमालिङ्गिता ततः ॥ ७३ ॥ निधोत्सङ्गे च संस्थाप्य चुम्बित्वाथ मुखाम्बुजे । सा मयाभिदधे वत्से ! विषाद मुञ्च सर्वथा ॥ ७४ ॥ चिरमेवेप्सित पश्चापात एष पितैव ते । वर्तते घटिका नूनं वत्स्यन्त्यत्र मयोद्भवे ॥७५॥ मान्यानि क भमेयन्ति ? वदन्तीति जनेश्वरः । चमूनाथोद्वती वत्सा तदा चास्ते यथो रविः ॥७६॥ वत्सां विनोदयन्तीभिः कथाभिः प्रीतिहेतुभिः । अस्माभिः शर्वरी साथ कथञ्चिदतिवाहिता ॥७७॥ प्रातर्लवलिका प्रोचे मयाप्येवं हलेऽम्बरे । स्थिपसा स्वस्वामिनो मार्गं पश्य किं चिरयस्यसौ ? ॥ ७८ ॥ ततमेव क्षणं व्योम्नि स्थिपसा धृतिमानसा । अवतीर्णां मया प्रोचे हले ! प्रमुदितासि किम् ? ॥ ७९ ॥ किमागतस्तव

१ 'स्या च मु' क० प०, 'या च मु' ख० ग० । २ समा ख० ।

स्वामी ? ततो गदितमेतया । न स्वामी किन्तु तौ राजपुत्रावम्ब ! समागतौ ॥ ८० ॥ ताभ्यां च वीक्षितं भर्तृदारिकादर्शनेच्छया । सर्वं वनं परं गुप्तदेशस्थेयमदर्शि न ॥ ८१ ॥ विषण्णः सोऽथ मित्रेण प्रोचे स्वामिसुताप्रियः । तले तस्यैव चूतस्य स्थीयतां गुणधारण ! ॥ ८२ ॥ दृष्टासीद्भवता यत्र सा स्मेराम्भोजलोचना । कदाचिद्दैवयोगेन सा तत्रैवाप्यते पुनः ॥ ८३ ॥ एवं भवत्विति ततो गदितेऽनेन तौ गतौ । तत्संमुखमिदं विद्धि हर्षकारणमम्ब ! मे ॥ ८४ ॥ किं मां प्रतारयस्येवमिति प्रोक्तेऽथ वत्सया । तत्प्रत्ययार्थं शपथशतान्येषा विनिर्ममे ॥ ८५ ॥ न प्रत्येति तथाप्येषा ततो लवलिका मया । प्रोचे किं बहुनानेन[1] कुमारं मम दर्शय ॥ ८६ ॥ येन तं स्वयमत्रैवानीय वत्सां प्रमोदये । एषाह प्रगुणास्म्येषा जवादम्बा प्रवर्त्तताम् ॥ ८७ ॥ ततो विमुच्य वत्सायाः पार्श्वे धवलिकामहम् । अनया लवलिकया सहायाता त्वदन्तिके ॥ ८८ ॥ परमार्थस्त्वदेषोऽत्र तां कण्ठगतजीविताम् । वत्सां मेऽनुग्रहं कृत्वा कुमारो द्रष्टुमर्हति ॥ ८९ ॥ कुलन्धरस्य वदने मयाथ प्रविलोकिते । कुमार ! गम्यतां कोऽत्र विरोधः ? इति सोऽवदत् ॥ ९० ॥ ततो वयं गतास्तत्र मया मदनमञ्जरी । ददृशेऽथ यथाख्याता साभिलापं तथाप्यहम् ॥ ९१ ॥ अन्योन्यालोकनाच्चैवं तदाऽऽवां मुदितौ भृशम् । सुखामृतमहाम्भोधिमग्नाविव बभूविव ॥९२॥ वत्से ! लवलिकावाक्ये किं जातः प्रत्ययोऽधुना ? । इत्युक्ता कामलतया स्थिता साधोमुखी ततः ॥ ९३ ॥ अत्रान्तरे च रोचिष्णुभूरिखेचरसंयुतः । रत्नैर्भृत्वा विमानानि तत्रागात् कनकोदरः ॥ ९४ ॥ ततो मिथः

१ किं बहुनानेन तावत् कुमारं ख० ।

छलौषिस्याः सर्वेऽपि न्यपतन् क्रमात् । मामैक्षिष्ट चिरं स्निग्धदृशा च कनकोदरः ॥ ९५ ॥ स प्रवायमिति
ध्यात्वाथ मुदितचेतसा । पृष्टा कामछटापश्यो व वृत्तान्तमथाखिलम् ॥ ९६ ॥ तच्छ्रुत्वा सविक्षेपेण पावत्
प्रहृष्टोऽभवत् । तावदेत्याशु चतुरस्तस्कर्णे किमिदाकथयत ॥ ९७ ॥ विलम्बेनालमित्युक्त्वा प्रियां सोऽथ कुल-
न्धरम् । धूम्र संवेगतः पाणिग्रहमावामकारयत् ॥ ९८ ॥ वज्रेन्द्रनीलवैडूर्यपद्मरागादिकानि च । रत्नानि तान्य
दान्मह्यमपरोऽम्य कुलन्धरम् ॥ ९९ ॥ अत्रान्तरे च सभयं समायात नमस्तले । विद्याधरबलं वीक्ष्य अगाद
कनकोदरः ॥ १०० ॥ भो ! भो ! विद्याधरास्तूर्णं सज्जीभवत संमुखाः । सोऽय चतुरवृत्तान्तः साम्प्रतं स्फुटतां
गतः ॥ १०१ ॥ सकोपा ये गताः पूर्वं तेऽमी संभूय खेचराः । समागतामैरुर्मीत्वा द्रष्टुं मदनमञ्जरीम् ॥१०२॥
एतेषामिदमाकृत क्रिडाय गुणधारणः । हीनो भूगोचरोऽस्माको यच विद्याधरोत्तमाः ॥ १०३ ॥ तदेते न यत्
न्यत्र चापराह्णादमन्दिरे । प्रेरयाम: क्षणात्तावत् मरुता इव पायसान् ॥ १०४ ॥ तच्छ्रुत्वा स्वामिनो वाक्यं तेऽय
भूमिष्ठखेचराः । सन्नद्धुमारब्धास्तदा चाहमचिन्तयम् ॥ १०५ ॥ अहो ! न सुन्दरं जातमिदमेतेन हेतुना ।
यतो महानर्थोऽमीषां प्रलयोऽत्र भविष्यति ॥ १०६ ॥ एवं मे ध्यायतः केनाप्यन्तरिक्षविसिस्मिसम् । छेप्यनिर्मि
तमभके स्तम्भितत्वा सकलद्वयम् ॥ १०७ ॥ समं मदनमञ्जर्या निविष्ट वरविष्टरे । नमःस्थास्ते च मां वीक्ष्य खेचराः
पर्यचिन्तयन् ॥१०८॥ अहो ! रूपमहो ! कान्तिर्नरस्यास्य महात्मनः । अहो ! मदनमञ्जर्याः पर्याप्तोचितकारिता
॥ १०९ ॥ यथायमीदृशो मर्त्यो गदितः स्वपरीक्षया । अमुनेव चय मूर्ते स्तम्भिता निश्चेतसा ॥ ११० ॥

यतो मदनमञ्जर्या वयस्येन च संयुतः । स्वयं मुत्कलदेहोऽयं दृश्यते न तु शेषकाः ॥ १११ ॥ तद्दुष्टं कृतमस्माभिर्नररत्नं यदीदृशम् । जिघांसितं महापापैः प्राप्तमेतद्धि तत्फलम् ॥ ११२ ॥ स्वामी तदयमस्माकं वयमस्य पदातयः । ध्यात्वेति शान्तकोपास्ते केनचिन्मुत्कलीकृताः ॥ ११३ ॥ समेत्य सत्वरं तेऽथ खेचराः क्रमयोर्मम । पतित्वा क्षमयित्वा च भृत्यभावं प्रपेदिरे ॥ ११४ ॥ दृष्ट्वा तच्चेष्टितं सोऽपि ससैन्यः कनकोदरः । शान्तकोपो मुत्कलोऽभूत्खेचराश्च मिथोऽमिलन् ॥ ११५ ॥ तं च विज्ञाय वृत्तान्तं तातो मे मधुवारणः । तत्राजगाम शुद्धान्तामात्यपौरादिसंयुतः ॥ ११६ ॥ ततो मदनमञ्जर्या खेचरैश्च समन्वितः । अभ्युत्थायानमं भक्त्या तातम्बाचरणानहम् ॥ ११७ ॥ ममाथ तादृशीं दृष्ट्वा समृद्धिमतिशायिनीम् । जनको जननी सर्वो लोकश्च मुमुदेतराम् ॥ ११८ ॥ महता च विमर्देन प्राविक्षाम पुरे वयम् । ततोऽथ तोपयामास दानाद्यैः कनकोदरम् ॥ ११९ ॥ गते सौख्यमये तत्र वासरेऽथ मया क्षपा । सार्द्धं मदनमञ्जर्या सुखेनैवातिवाहिता ॥ १२० ॥ प्रातः कुलन्धरोऽथैत्य मामूचे यन्मयैक्ष्यत । मानुपपञ्चकं स्वप्ने द्वे स्त्रियौ पुरुषास्त्रयः ॥ १२१ ॥ तैश्चाहं जगदे सौख्यं यदिदं गुणधारणे । यच्चान्यदपि तत्सर्वमस्मन्मूलं कुलन्धर ! ॥१२२॥ एवं तानि ब्रुवाणानि जग्मुश्चक्षुरगोचरम् । विबुद्धोऽहं कुमाराथ न जाने कानि तानि तु ? ॥ १२३ ॥ मयोक्तं कथ्यतामेष तातादिभ्यस्त्वयाधुना । स्वप्नो विज्ञायते येन भावार्थोऽस्य परिस्फुटः ॥ १२४ ॥ कुलन्धरोऽथ मद्युक्तो गत्वा विद्वद्युतं सदः । तातादिभ्यस्तमाचख्यौ स्वप्नं तेऽपि व्यचारयन् ॥ १२५ ॥ कुमारस्यानुकूलानि देवरूपाणि कानिचित् । वर्त्तन्ते तैर्मुदा स्वप्ने

तन्मित्रायेत्यकथ्यत ॥ १२६ ॥ तच्छ्रुत्वाथ मयाचिन्ति किमेतानि कुळ-धरः। पश्चाद्राधीरपुरा किं वा चत्वारि कनक्षेदरः ? ॥ १२७ ॥ कथ वा कानि चैतानि ममैव कार्यचिन्तनम्। कुर्वन्ति ? सर्वमेवेद गहन प्रतिभाति मे ॥ १२८ ॥ ततो यदि यति कश्चिद्रक्ष्यामि ज्ञानिनं तदा। संदेहमेनं प्रक्ष्यामीत्यालोच्याह हृदि स्थित ॥ १२९ ॥ तेऽथ चिवायराः सर्वे मृत्यभावं प्रपद्य मे। दिनानि कतिचित्तत्र स्थित्वा च स्वं पद ययुः ॥ १३० ॥ ततो मदन मञ्जर्या सार्द्धं विलसतो मम। पूर्णसर्वाभिलाषस्य ययो कालः कियानपि ॥१३१॥ आह्लादमन्दिरेऽन्येद्युः समार्यः सकुळन्धरः। गतोऽहं कन्दनामानमपश्य मुनिपुङ्गवम् ॥ १३२ ॥ तं प्रणम्य न्यपीद च तत्पुरः शुद्धभूतले। सोऽपि दत्त्वाशिषं मह्य विदधे धर्म्मदेशनाम् ॥ १३३ ॥ तां चाकर्ण्ययता सम्यक् प्रादुर्भूतो पुनर्मया। तो सम्यग्दर्शन सदागमो दृष्टो मुगेक्षणे ! ॥ १३४ ॥ ततस्तौ मस्यमित्राय चा-चतो हितकारणो। गुरुवाक्यप्रबुद्धेन प्रपभो मायतो मया ॥ १३५ ॥ इतश्च यः पुराख्यातो भूपतिर्विबुधालये। वेदनीयनरेन्द्रस्य पदातिः सातनामकः ॥ १३६ ॥ सोऽप्यन्तं मयि रक्तारमा पुराप्यागान्मया सह। आसीत् तिरोहितः किन्तु प्रादुर्भूतस्तदा पुनः ॥१३७॥ युग्मम् ॥ ततो या प्रेयसीरत्नभोगमन्या सुखासिका। तदानीं गुरुमूले मे सानन्तगुणतां गता ॥ १३८ ॥ कुळ-धरेण मदन मञ्जर्यापि मयेव तो। प्रतिपन्नावथ मुनिर्विदधे देशनां पुनः ॥ १३९ ॥ अत्रान्तरे चित्तवृत्तिमहाटव्यां प्रकम्पिताः। मयेन शोचर्के स्थित्वा महामोहादयः स्थिताः ॥ १४० ॥ चारित्रधर्म्मराजोऽथ प्रोचे सद्बोधमन्त्रिणम्। अस्माकं तावदार्येण निहतो रोपकोऽधुना ॥ १४१ ॥ एष्ठ कर्म्मपरीणामं विधाभावय कन्यकाम्। पार्श्वे संसारिजीवस्य पन्तं

ते युज्यते ततः ॥ १४२ ॥ कन्दसाधुममीपस्थः साम्प्रतं स चैरमेया। विज्ञातस्तत्र चावश्यं भवन्तं प्रतिपत्स्यते
॥ १४३ ॥ मन्त्री प्रोचेऽथ देवात्र विलम्बोऽद्यापि युज्यते। सातपुण्योदयौ मित्रे यतस्तत्रातिवत्सलौ ॥ १४४ ॥
कालं कियन्तमप्येतौ ततस्तं गुणधारणम्। भुञ्जानं विषयान् गेहे प्रसभं धारयिष्यतः ॥ १४५ ॥ ततस्तदनु-
वृत्त्यासौ यावत्तिष्ठति वेश्मनि। विद्यामादाय तावन्मे न गन्तुं तत्र युज्यते ॥ १४६ ॥ किन्त्वेष प्रेष्यतां देव!
कुमारः सपरिच्छदः। गृहिधर्म्मो यतोऽमुष्यात्रसरस्तत्र सुन्दरः ॥ १४७ ॥ गतमात्रमिमं यस्मात् स भावेन
प्रपत्स्यते। यास्यामोऽवसरे जाते पश्चात्सर्वे वयं पुनः ॥ १४८ ॥ तच्छ्रुत्वा प्रैषि चारित्रधर्म्मेण स निजाङ्गजः।
सोऽपि कर्म्मपरीणाममापृच्छ्यागान्मदन्तिके ॥ १४९ ॥ देशनां कुर्वता कन्दमुनिनाथ प्रकाशितम्। सभार्य
सपरीवारं गृहिधर्मं सुभावतः ॥ १५० ॥ कुलन्धरेण मदनमञ्जर्या च समन्वितः। प्रपेदेऽहं विशेषेण बभूव च
सुखासिका ॥ १५१ ॥ युग्मम् ॥ तं स्वप्नसंशयं सोऽथ मया पृष्टोऽवदन्मुनिः। विनातीन्द्रियवेत्तारं जायतेऽस्य न
निर्णयः ॥ १५२ ॥ गुरवः केवलालोकभास्करा मम सन्ति च। सूरयो निर्मला नाम दूरदेशविहारिणः ॥ १५३ ॥
तत्पादमूलं यास्यामि वन्दनार्थमहं यदा। तदा तान् प्रश्नयिष्यामि त्वत्सन्देहमिमं ततः ॥ १५४ ॥ मयोचे यदि
तेऽत्रैव गुरवस्ते कथञ्चन। आगच्छेयुस्ततस्तत् स्यात् सुन्दरादपि सुन्दरम् ॥ १५५ ॥ मुनिराह महाभाग! गतोऽहं
वचनेन ते। गुरून् विज्ञाप्य ते नूनं पूरयिष्ये मनोरथान् ॥ १५६ ॥ अथवा केवलालोकालोकिताखिलचेतसः।

१ स्वभा० ता०। २ ०तो मे स्यात् ग०।

विज्ञाय भवतश्चिह्नमागमिष्यन्ति ते स्वयम् ॥ १५७ ॥ केवलं गृहिधर्म्मेऽत्र सम्यग्दर्शनसंयुते । सदागमे च
कर्त्तव्यो भवता तावदादरः ॥ १५८ ॥ तद्वचोऽहं प्रपद्याथ प्रेयसीसुहृदन्वितः । तं नत्वा स्वं ययौ गेहं गुरुमूलं
मुनिः स तु ॥ १५९ ॥ कालक्रमेण तातेऽथ लोकोत्तरमुपेयुषि । बभूवाहं महाराजः पुरन्दर इवापरः ॥ १६० ॥
परं प्राप्तेऽपि तादृक्षे राज्ये गार्द्ध्यमभून्न मे । मैत्री सदाममायेषु विभवस्तेषु निर्भराम् ॥ १६१ ॥ आह्लाद
मन्दिरेऽन्येद्युस्तेऽथ निर्म्मलसूरयः । पर्युस्तदागर्षि चारुपरक्ष्यामासयः पुमान्मम ॥ १६२ ॥ पारितो
षिकदानात् स तोषयित्वाथ तोषभाक् । नमस्कर्तुमहं सूरिं प्रययौ सपरिच्छदः ॥ १६३ ॥ ततो हेमाम्बुजासीन
नरामरनिषेवितम् । मुनिमण्डलमध्यस्थं तं वीक्ष्य मुमुदेतराम् ॥ १६४ ॥ मुक्त्वाथ राजचिह्नानि द्वारस्थानर्चवन्द
नम् । दत्त्वा भगवतः शेषसाधूनहमनसिषम् ॥ १६५ ॥ यथास्थानं निषण्णेषु सर्वेषु भगवानथ । चक्रे कर्म्मविपो
पाकसूचामां धर्म्मदेशनाम् ॥ १६६ ॥ निशम्य देशनां तां च निःसङ्गसुखसंवसिनीम्[1] । दीक्षोत्सुकं मनो मेऽभूत्प्र
तनूभूतकर्म्मणः ॥ १६७ ॥ अत्रान्तरे कन्दमुनिः पप्रच्छ प्राञ्जलिः प्रभुम् । विधातुं भगवन् ! कालविलम्बः
कस्य दुःखदः ? ॥ १६८ ॥ प्रभुः प्राह ससन्देहं जिज्ञासोर्गुरुसन्निधौ । मुनिरूचे तदच्छिन्त गुणधारणसत्तमम्
॥ १६९ ॥ एवं कियत इत्युक्ते गुरुणाथ मयोदितम् । महानुग्रहो मेऽसौ ततः प्राह गुरुः पुनः ॥ १७० ॥
राजन्नय ते सन्देहः स्वप्ने यत्कनकोदरः । चत्वारि मानुषाण्यप्राक्षीत् पञ्च तु कन्धरः ॥ १७१ ॥ कानि तानि ?

१ न्यासिनीम् क० ख० म० प० ।

कथं वा मत्कार्यनिर्वर्त्तकानि च ? । किं तानि देवरूपाणि ? किं वा स्वप्नौ निरर्थकौ ? ॥ १७२ ॥ युग्मम् ॥ मयोक्तं भगवन्नेवमिदं प्राह गुरुस्ततः । महतीयं कथा राजन् ! सावधानोऽवधारय ॥ १७३ ॥ ततो भगवताऽसंव्यवहार-नगरादिकाम् । कथयित्वा कथां सर्वां मदीयामित्यकथ्यत ॥ १७४ ॥ तदेवं चित्तवृत्तौ ते विद्यते राज्यमान्तरम् । महामोहादिभिस्त्वेतदभूदुद्दालितं पुरा ॥ १७५ ॥ ततो वामतया कर्म्मपरिणामनृपोऽप्यसौ । तदेव हि महामोहादि-बलं परिपुष्टवान् ॥१७६॥ सम्प्रत्येषोऽनुकूलस्तेऽस्ति तेन प्रगुणीकृता । त्वां प्रति स्वप्रिया कालपरिणत्यभिधानिका ॥ १७७ ॥ प्रसादिता च ते भार्या भूपते ! भवितव्यता । प्रह्वीकृतोऽङ्गभूतश्च स्वभावः स्वमहत्तमः ॥ १७८ ॥ तथा प्रोत्साहितः पुण्योदयः सहचरस्तव । अवज्ञाताश्च ते किञ्चिन्महामोहादयो द्विषः ॥ १७९ ॥ चारित्रधर्म्म-राजाद्याः सर्वेऽप्याश्वासिता मनाक् । दर्शिता सुखमाला च पूर्वमप्यन्तरान्तरा ॥ १८० ॥ यदादीष्टौ पुनस्ते सम्यग्दर्शनसदागमौ । तदादिकर्म्मपरिणामोऽनुकूलतरस्त्वयि ॥ १८१ ॥ तेन प्रोत्साहितः पुण्योदयोऽथ सुख-सिद्धये । तवेमां दापयामास भार्यां मदनमञ्जरीम् ॥ १८२ ॥ किञ्च सर्वार्थकर्तॄण्येतान्येवाहं तु नेति सः । महा-पुरुषभावेन कनकोदरभूपतेः ॥ १८३ ॥ स्वप्ने कर्म्मपरीणामः कालपरिणतिस्तथा । भवितव्यतया युक्तः स्वभाव-श्चेति नामतः ॥ १८४ ॥ आस्ते मदनमञ्जर्या वरोऽस्माभिर्निरूपितः । ब्रुवन्तीत्यादि चत्वारि मानुषाण्यप्यदर्शयत् ॥ १८५ ॥ विशेषकम् ॥ अथ भद्र ! त्वयात्मापि प्रकाश्यस्त्वां विना यतः । चत्वार्यपि शुभं कार्यं न वयं कर्तुमी-श्महे ॥ १८६ ॥ इति कर्म्मपरीणामादिष्टः पुण्योदयः पुनः । कुलन्धरायादर्शयत् तानि पश्चात्मना सह ॥ १८७ ॥

॥ युग्मम् ॥ मानुषाणि यदेतानि तान्येवाथ नरेश्वर ! । तेषां चतुर्णां पक्षानां चेष्टाये विद्धि कारणम् ॥ १८८ ॥
किञ्च कर्म्मपरीणामस्यास्य सेनापती उभौ । विद्येते प्रबलौ पापोदयपुण्योदयाभिधौ ॥ १८९ ॥ तत्रादिमो महा
मोहभूपालबलपोषकः । चारित्रधर्म्मसैन्यस्य द्वितीयः परः पुनः ॥ १९० ॥ एवं स्थिते च तान्येव प्रतिकूलानि
तेऽनघम् । पापोदयान्मानुषाणि चापन्ते दुःखकारणम् ॥ १९१ ॥ तान्येव चानुकूलानि पुण्योदयवशात्तव । सुख
सन्दोहदायीनि भवन्ति गुणधारण ! ॥ १९२ ॥ किञ्च पापोदयो मित्र मूलादारभ्य तेऽभवत् । तथैव ते प्रसिद्ध
स्वार्थसिद्धः क्वापि भार्यया ॥ १९३ ॥ किं बहुनात्र यत्प्राप्तं प्राप्स्यते च शुभाशुभम् । त्वया तत्रोपयुक्तानि तान्येव
ननु कारणम् ॥ १९४ ॥ अत एव च ते पुण्योदयेन प्रेरिता सदा । भूचरखचरे सैन्ये तस्तम्भ चनन्द्रवता ॥ १९५ ॥
यथोदित भवन्ताह किमकिञ्चित्करास्ततः । धरिराह महाराज ! नैवं मन्याः कदाचन ॥ १९६ ॥ स्वमेव योग्यता
चेत्ः प्रधानं कारणं यतः । सुन्दरेतरवस्तूनां सहकारीणि तानि तु ॥ १९७ ॥ यथोक्त नाथ ! यद्येव मम कार्य
प्रसाधने । किं कारणानीयन्त्येव किं वान्यदपि विद्यते ? ॥ १९८ ॥ धरिरूचे महाराज ! सर्वज्ञः सुस्थितोऽस्ति यः ।
निर्वृतो पुरि तस्याज्ञाप्यत्रार्थे कारणं परम् ॥ १९९ ॥ लङ्घिता सा हि दुःखाय पुराभूदधुना तु ते । पालिता
सुखलेशाय ततोऽपृच्छमहं पुनः ॥ २०० ॥ सञ्चेरमार्यरत्नस्य प्राप्तराज्यस्य च प्रभो ! । उत्तीर्णसम्पत्त्यगृहि
धर्म्मस्य चापि मे ॥ २०१ ॥ विद्यते योऽपमानन्दः सोऽपि सौख्यलवो यदि । परिपूर्णं ततः कीदृक् सौख्यं मम
भविष्यति ? ॥ २०२ ॥ युग्मम् ॥ गुरुः प्राह दृष भवान् कन्यकाः परिणेष्यति । ततस्ताभिः सह प्रेमाध्ये किमपि

यत्सुखम् ॥ २०३ ॥ तदीयापेक्षया सौख्यलेश एवायमस्ति ते । मयाथ गदितं पूज्यपादाः किं निर्दिशन्त्यदः ?
॥ २०४॥ यतस्तिष्ठाम्यहं त्यक्त्वाप्येतां मदनमञ्जरीम् । दीक्षां जिघृक्षुरन्यास्तत्परिणेष्यामि ताः कथम् ? ॥ २०५॥
सूरिराह सहैताभिस्त्वां दीक्षिष्यामहे वयम् । स्थितोऽहमेतच्चाकर्ण्य किमेतदिति विस्मितः ॥ २०६ ॥ ततः
कन्दमुनिः प्राह कतमास्ताः सुकन्यकाः ? । याः प्रभो ! परिणेतव्या राज्ञाथ गुरुरब्रवीत् ॥ २०७ ॥ चित्तसौन्दर्यपुरे
शुभपरिणामभूपतेः । निष्प्रकम्पताचारुताजाते क्षान्तिदये सुते ॥ २०८ ॥ तथा शुभ्रमानसेशशुभाभिसन्धिभूपतेः ।
वरतावर्यतोद्भूते मृदुतासत्यते सुते ॥ २०९ ॥ तथा शुद्धाभिसन्धेः स्तो विशदमानसेशितुः । [1]शुद्धपापभीरुतयोः ऋजु-
ता[2]चौरते सुते ॥ २१० ॥ तथा च शुभ्रचित्तेशसदाशयनरेशितुः । सुते वरेण्यतादेव्यां( °व्याः )स्तो ब्रह्मरतिमुक्तते
॥ २११ ॥ तथा सम्यग्दर्शनस्य विद्याख्या मानसी सुता । सुता चारित्रधर्मस्य विरत्यां च निरीहता ॥ २१२ ॥
कन्या दशैतास्ताः कर्म्मपरिणामो महिपतिः । स्वकुटुम्बस्य मन्त्रेण राज्ञेऽस्मै दापयिष्यति ॥ २१३ ॥ किन्तु
कन्दमुने ! कर्म्मपरिणामानुकू[3]लताम् । राज्ञापि वाञ्छताम्यस्या मैत्र्यादिगुणसंहतिः ॥ २१४ ॥ षण्मासमात्र-
कालेन कुर्वतोऽस्य च मद्वचः । विद्यामादाय सद्बोधमन्त्री सम्यक् समेष्यति ॥ २१५ ॥ विवाह्य कन्यकामेतां
स्थास्यत्यस्यान्तिके च सः । यदसौ किमपि ब्रूते राज्ञा कार्यं ततश्च तत् ॥ २१६ ॥ प्रभो ! महाप्रसादोऽयमित्युक्त्वाहं
प्रणम्य च । प्रविष्टोऽहं पुरे कर्त्तुमारब्धोऽथ गुरोर्वचः ॥२१७॥ अन्यदा भगवद्वाक्यं भृशं भावयतो निशि । मम सुप्त-

---

१ शुद्धतापापभीरुतयोरित्यर्थः । २ °चोरते ता० क० ख० घ । ३ °ठनम् ता० ।

प्रमुदस्य तद्बोधः पार्श्वमाययौ ॥ २१८ ॥ तस्यागममसंवेगस्तन्यास्विकपमुखी मया । दृष्टाथ प्रथमारोहा चिवया
कन्या तदन्तिके ॥ २१९ ॥ तदथा च मयोक्ता सा दृष्टाः सदागमादयः । मातः पृष्टो मया गत्वा हर्षहेतु गुरुर्जगौ
॥ २२० ॥ यत्कर्मपरिणामेन राज्ञस्त्वद्गुणतोषिणा । विद्यामादाय सद्बोधः ससैन्यः प्रेषि तेऽन्तिकम् ॥ २२१ ॥
ज्ञानसंवरणपापोदयादेरस्य वर्त्म च । मन्त्रागारस्य रुरुधे ततोऽभूद्दारुणो रणः ॥२२२॥ सद्भावनाप्रभृते च त्वयि
तत्समर्थं बलम् । सद्बोधस्यागमबलेन नष्टाः पापोदयादयः ॥ २२३ ॥ महत्याथ विक्षेपेण ज्ञानसंवरणं नृपम् ।
सद्बोधस्तेऽन्तिके लब्धजयो विद्यायुगाययौ ॥ २२४ ॥ तदेष हर्षहेतुस्ते पुनस्ते रणकारिणः । क्षीणोपधान्वा
निर्वास्याः सद्बोधादेस्ततस्त्वया ॥२२५॥ इत्युक्त्वा सूरयोऽन्यत्र जग्मुर्मेऽथ गुरोर्गिरा । वर्धमानस्य सद्बोधमिव
इवापदर्शयत् ॥ २२६ ॥ नरौ द्वौ क्षीणपापुतो मामबोधय नामतः । धर्म्मशुक्लाविमौ पीतपद्मशुक्ला इमास्तथा
॥ २२७ ॥ युग्मम् ॥ ततो राज्येऽन्तराप्ते ते नरावेतौ प्रवेशकौ । तथाये योषिताराय पुण्यीतोऽन्यापरं पुनः
॥ २२८ ॥ तदेतयोस्त्वयैतासु यत्नः कार्यस्त्वया महान् । ततो मयोदितं सर्वं करिष्याम्यार्य । ते यथा ॥ २२९ ॥
ततः कथंस्तदारेदं प्रविशामि पुन पुनः । विषयूपौ विलसामि तया च सह विद्यया ॥ २३० ॥ मानयामि
च सद्बोधादीनेव कुर्वतो मम । गते गुरौ क्रियन्मून सञ्चित मासपञ्चकम् ॥ २३१ ॥ ततस्तुष्टेन मे कर्म्मपरि
णामेन दापिताः । ताः कन्यास्तत्पितृभ्योऽस्य विधयावर्षनेषि च ॥ २३२ ॥ सात्त्विकमानसवर्षिविवेकाद्रिस्थितेऽ-

1 "समाऽसिक" स्व० । 2 प्रसमनिवस्था इत्यर्थः । 3 "सद्" ता० क० ग० प० । 4 "वनीपि च ता० क० ग० प० ।

स्म्यथ । नीतो जैनपुरे शुभपरिणामादयोऽमिलन् ॥२३३॥ तेषां सपरिवाराणामुपचारः कृतस्ततः । गणितं मे विवा-
हस्य दिनं क्षान्त्यादिभिः सह ॥२३४॥ अत्रान्तरे महामोहादयो युद्धोद्यता अपि । मद्भर्तुरधुना कर्म्मपरिणामोऽनु-
कूलधीः ॥२३५॥ ततोऽहमेव प्रस्तावं ज्ञापयिष्ये रणस्य वः । भवितव्यतयेत्युक्त्वा सम्परायान्निवारिताः ॥२३६॥
युग्मम् ॥ तथापि दुष्करा दीक्षेत्यादयः कुविकल्पकाः । शत्रुभिर्मे कृतास्तेऽपि सद्बोधस्य गिरा हताः ॥२३७॥
तेन चित्तसमाधाने नीतोऽहं मे च[2] दर्शिताः । चारित्रधर्म्मराजाद्यास्तैः प्रपन्ना च भृत्यता ॥२३८॥ निर्वासिता मदा-
देशान्महामोहादयोऽथ तैः । शोधिता चित्तवृत्तिश्च भग्नान्यरिपुराणि च ॥ २३९ ॥ विवाहः कर्त्तुमारेभेऽथान्तरै[1]-
र्बन्धुभिर्मम । स्थापिता मातरस्तत्र चाष्टौ समितिगुप्तयः ॥२४०॥ धर्मेण निर्मितं तत्र वह्निकुण्डं स्वतेजसा । जज्ञे
पुरोधाः सद्बोधः कर्म्माणि समिधो हुताः ॥ २४१ ॥ ततः सदागमज्योतिषिकेणाहं विधापितः । क्षान्त्यादिकन्य-
कोद्वाहं तुष्टास्तत्पितरोऽखिलाः ॥२४२॥ तथा शुभपरीणामतनया अपरा अपि । तन्निष्प्रकम्पताजाता मया बह्व्यो
विवाहिताः ॥२४३॥ एताश्च ता धृतिश्रद्धामेधाविविदिषासुखाः । मैत्रीप्रमुदितोपेक्षाविज्ञप्तिकरुणादिकाः ॥२४४॥
ततस्तेन स्वभार्याणां वृन्देन सह लीलया । अत्यर्थं निर्भरीभूता ल[3]लतो मे सुखासिका ॥ २४५ ॥ चिन्तितं
च मया सैष सुखस्तोमोऽनुभूयते । यः सूचितो मम पुरः पुरा निर्म्मलसूरिभिः ॥ २४६ ॥ अन्यदा तत्र
सम्प्राप्ताः श्रीमन्निर्मलसूरयः । गत्वा तत्राथ वन्दित्वा प्रव्रज्या याचिता मया ॥ २४७ ॥ सूरिराह महाराज !

१ °स्मि च ता० । २ ऽथ दर्शिताः ख० । ३ लसतो क० ख० ग० घ० ।

माधवोऽस्त्येष सा सव । केवलं व्यवहारेण दातव्या धृष्यतोऽधुना ॥ २४८ ॥ महाप्रसाद इत्युक्त्वा ततोऽत्र
जनधारणम् । राज्ये न्यस्य सुतं कृत्य कृत्यान्यदपि पोषितम् ॥ २४९ ॥ सम मदनमञ्जर्या कुलन्धर
सुतयुतः । श्रीमद्धर्म्मसूरीणां पादान्ते व्रतमाददे ॥ २५० ॥ युग्मम् ॥ ततो मेऽभ्यस्तनिःशेषस्य सद्भमोऽ-
भूदथागमः । तथा स्थिरतरीभूतः स सम्यग्दर्शनोऽपि हि ॥ २५१ ॥ प्रमथतापगादीनि रिपुक्रीडास्पदानि च ।
मयानि सुतरां चित्तधिमक्रेऽतिनिर्म्मला ॥ २५२ ॥ एवं चिरस्य पर्यन्ते विहितानशनस्य मे । मयिवस्यतया
लोपादपरा गुटिका ददे ॥ २५३ ॥ तयेश्वरा च नीत्वाहं स्थापितो विबुधालये । कल्पातीतेषु विबुधेष्वाद्यग्रैवेयके
सुखम् ॥ २५४ ॥ ततश्चैरवते सिंहपुरे देवामहेन्द्रयोः । सुतो गङ्गाधरो नाम क्षत्रियो निर्मितस्तया ॥ २५५ ॥
लास्या जातिस्मृतेर्दीक्षां सुघोषाचार्यसन्निधौ । ग्रैवेयके द्वितीयेऽगां मापविशेषेण पूर्ववत् ॥ २५६ ॥ परिपाट्यानया
भद्रे ! कृताः पञ्च गमागमाः । मानवीयां समादाय ग्रैवेयकनिवासिषु ॥ २५७ ॥ एकैकशस्या जातानि तत्र तत्र
ममानघे ! । सागरोपमानि यावत् पञ्चमे सप्तविंशतिः ॥ २५८ ॥ ततश्च पश्चवारायां भरते शङ्खनामके ।
पुरे मत्तमयस्पन्दशोकीसपत्नमन्वने ॥ २५९ ॥ पुत्रो मन्नामरागिर्योर्मातोऽहं सिंहनामकः । राजपदे शुभाकारः
क्रमात्प्राप्तश्च यौवनम् ॥ २६० ॥ युग्मम् ॥ अन्यदा धर्म्मघ व्याख्यगुरोः पार्श्वे व्रतं मया । मधुरेऽथ समभ्यस्तो
साम्यादाः सदागमः ॥ २६१ ॥ ततश्च स्थापितः स्थाने निजेऽत्र गुरुणा तदा । समापेकृत्सवमके साधितमासिले
जैनैः ॥ २६२ ॥ ततो मे कुर्वतो व्याख्यां हेलानिर्जितवादिनः । पूजितस्य च रामायेल्लकास यशोमरः ॥ २६३ ॥

ततस्तां तादृशीं वीक्ष्य समृद्धिं भुवनाद्भुताम्। ईर्ष्ययेव महापापा रुष्टा मे भवितव्यता ॥ २६४ ॥ महामोहादिभिरथ ज्ञापितावसरैस्तया। पर्यालोचेन विषयाभिलाषस्य ममान्तिके ॥ २६५ ॥ मिथ्यादर्शनयुक्तः प्रैषि ज्ञानसंवरणो नृपः। शैलराजो गौरवाख्यनरत्रययुतस्तथा ॥ २६६ ॥ तदनु प्रेषितो रौद्राभिसन्धिकृतसन्निधिः। आर्त्ताशयाख्यः पुरुषस्ततस्तस्य च पृष्ठतः ॥ २६७ ॥ स्वत एवाययुः कृष्णनीलकापोतनामिकाः। स्त्रियस्तिस्रः स्वयं चैतैर्महामोहादिवैरिभिः ॥ २६८ ॥ प्रमत्ततां प्रवाह्योच्चैर्मण्डपादीनि तान्यलम्। कृतानि विस्मृतं मेऽथ सार्द्धं पूर्वचतुष्टयम् ॥ २६९ ॥ विशेषकम् ॥ ततोऽनन्तानुबन्धाख्यशैलराजोदये सति। मिथ्यादर्शनवश्योऽहमभवं मूढचेतनः ॥ २७० ॥ गौरवत्रितयस्यापि मयाथ वशवर्त्तिना। त्यक्तमुग्रविहारित्वं शिथिलत्वं तथादृतम् ॥ २७१ ॥ ततश्चारित्रधर्म्माद्याश्चित्तवृत्तौ तिरोहिताः। जातः श्रमणवेषोऽपि मिथ्यादृष्टिरहं तदा ॥ २७२ ॥ ततो रुष्टेन मे कर्म्मपरिणामेन भूभुजा। पापोदयं पुरस्कृत्य समादिष्टौ मया सह ॥ २७३ ॥ तीव्रमोहोदयात्यन्ताबोधौ मन्त्रिबलाधिपौ। समन्वितस्ततस्ताभ्यामहं पापोदयेन च ॥ २७४ ॥ भवितव्यतयैकाक्षनिवासे गुटिकावशात्। नीत्वाऽवस्थापयाञ्चक्रे वनस्पत्याख्यपाटके ॥ २७५ ॥ विशेषकम् ॥ प्रासादापवरकाणां नीत्या पूर्वोक्तयात्र च। कालं कियन्तमप्यस्थामन्यान्या गुटिका अदन् ॥ २७६ ॥ ततो नीतोऽन्यदान्येषु पाटकेषु पुरेषु च। पञ्चाक्षपशुसंस्थानेऽथानीतश्च कदाचन ॥२७७॥ ततो विशुद्धभावत्वान्नीतोऽस्मि विबुधालये। मुहुर्गमागमैर्व्यन्तरादिकल्पाष्टकावधि[1]

१ ०कावधेः ग० ।

॥ २७८ ॥ ततश्च मानवावासेऽपि कर्म्माकर्म्मभूमिषु । नीत्वा कल्पोपपन्नेषु कदापि क्वापि निर्म्मितः
॥ २७९ ॥ तथा च ऊर्ध्वार्हदीक्षां तपोनिष्ठ्यवेदकः । शुक्लः क्रियाकलापेन ध्यानाभ्यासपरायणः ॥ २८० ॥
केवलं किञ्चिदाप्तोक्तं पदं वाक्यमथाक्षरम् । अभव्यश्च जातः सर्वग्रैवेयकेष्वपि ॥ २८१ ॥ युग्मम् ॥ भ्रमण
स्यास्य हेतुश्च भद्रे ! सर्वेदृष्टेष्विति । यत् सिद्धाचार्यवाकाले क्षेपितव्य विदधे मया ॥ २८२ ॥ यथागृहीतसङ्केता
प्राहैतदि न केवलम् । दुःखं पूर्वोक्तमपि ते कृतं स्वैरेव दुष्कृतैः ॥२८३॥ संसारिजीवः प्रोचेऽथ शृणु ! त्वं चर्चसेऽ-
धुना । नाम्नाऽगृहीतसङ्केता मायतस्तु विचक्षणा ॥ २८४ ॥ तदाकर्ण्यैव चार्वङ्गि ! साम्प्रतं येन हेतुना । जातोऽ
हमीदृशावस्थस्तस्कराकारधारकः ॥ २८५ ॥ ततो ग्रैवेयकावन्त्यादानीतोऽहं महेलया । पुरीं मनुजगत्यन्तः
पातिनीं क्षेमनामिकाम् ॥ २८६ ॥ सा च मनुजगत्यन्तर्महाविदेहनामके । हट्टमार्गेऽस्तीत्यभ्रेऽपि भानाति मचली
किल ॥ २८७ ॥ सुकच्छविजयस्थानमिदं भद्रे ! निगद्यते । यत्र स्थिता यथ यूप पुरी सा च मनोहरा ॥ २८८ ॥
तत्रास्ति चर्चयत् भार्या नाम राजा युगन्धरः । तद्देव्योऽप्युत्कृष्टरूपा देव्यस्य नलिनीति च ॥ २८९ ॥
चतुर्दशमहास्वप्नालोकसूचितपौरुषः । तस्याः कुक्षावहं क्षिप्तो भवितव्यतया ततः ॥ २९० ॥ परिपूर्णेऽथ
कालेऽहं जातः पुण्योदयान्वितः । जन्मोत्सवं च पितरौ कारयामासतुर्मुदा ॥ २९१ ॥ ततो महाप्रमोदेन व्यतीते
मासमात्रके । मम प्रतिष्ठितं नाम चक्रायमनुसुन्दरः ॥ २९२ ॥ ततोऽभ्यस्तकलः प्राप तारुण्यकमहं क्रमात् ।
यौवराज्येऽभिषिक्तोऽथ तातेनोत्सवपूर्वकम् ॥ २९३ ॥ पितर्युपरते चाहं षट्खण्डविजयाधिपः । चक्रवर्त्यभव

भोगसरःकर्दमक्षकरः ॥ २९४ ॥ एवं च पूर्वलक्षाणां किञ्चिदूना गता मम । चतुर्भिरधिकाशीतिः प्राज्य-
साम्राज्यशालिनः ॥ २९५ ॥ अन्यदा च ससैन्योऽहं देशदर्शनकाम्यया । प्राप्तश्चित्तरमोद्यानेऽस्मिन् शङ्खपुरमण्डने
॥ २९६ ॥ इतश्च यानि मेऽभूवन् गुणधारणजन्मनि । तद्यथा प्रथमो धर्म्मदेष्टा कन्दाभिधो मुनिः ॥ २९७ ॥
कुलन्धरो वयस्यश्च भार्या मदनमञ्जरी । तान्यप्येषा भवचक्रेऽभ्रमयद्भवितव्यता ॥ २९८ ॥ सोऽथ कन्दमुनिः
क्वापि कृतमायः समाहृतः । अस्यैव विजयस्यान्तर्भूते हरिपुरेऽनया ॥ २९९ ॥ तत्र भीमरथो राजा सुभद्रा
तस्य च प्रिया । समन्तभद्रनामा च तयोरस्ति तनूद्भवः ॥ ३०० ॥ ततः कुक्षौ सुभद्रायास्तया कन्दः प्रवेशितः ।
क्रमाच्च निर्गतो जाता महाभद्राभिधा सुता ॥ ३०१ ॥ समन्तभद्रो जग्राह गृहवासपराङ्मुखः । युवापि हि परिव्रज्यां
सुघोषाचार्यसन्निधौ ॥ ३०२ ॥ क्रमादधीतनिःशेषसिद्धान्तं तं महामतिम् । स्वपदे स्थापयामासुर्गुरवो गुणवेदिनः
॥ ३०३ ॥ महाभद्रां च तां रविप्रभपद्मावतीसुतः । राजा गन्धपुराधीशः परिणिन्ये दिवाकरः ॥ ३०४ ॥
दैवात् तस्मिंश्च पञ्चत्वं गते सा व्रतमग्रहीत् । भ्रात्रा समन्तभद्रेण सूरिणा प्रतिबोधिता ॥ ३०५ ॥ प्रवर्त्तिनीपदेऽ-
स्थापि गीतार्था [3]सा च सूरिभिः । विहरन्ती च सम्प्राप पुरे रत्नपुरेऽन्यदा ॥ ३०६ ॥ तस्मिन्मगधसेनाख्यः
समस्ति पृथिवीपतिः । सर्वान्तःपुरसारास्य देवी नाम्ना सुमङ्गला ॥ ३०७ ॥ इतः सा तत्सुतात्वेन कृता
मदनमञ्जरी । भवितव्यतया साभून्नाम्ना सुललितेति च ॥ ३०८ ॥ उद्यौवनापि पुरुषद्वेषिणी सा नृपात्मजा ।

१ निर्गमे जाता ग० । २ महीपतिम् ग० । ३ साऽथ सू॰ क० ख० ग० घ० ।

वरं कमपि नेयेप विषण्णौ पितरौ ततः ॥ २०९ ॥ तत्रायातां महामन्त्रां श्रुत्वा तामथ वन्दितुम् । जग्मतुस्तौ
सपुत्रीकौ हृष्टौ देवीनरेश्वरौ ॥ २१० ॥ वन्दित्वाथ यथास्थान तयोरासीनयोः पुरः । सापि मन्त्री महामन्त्रा विदधे
धर्मदेशनाम् ॥ २११ ॥ मौग्ध्यादपुच्छमानापि स्फुटं भगवतीयं सा । तत्र पूर्वभवस्नेहात् तात सुललितावदत्
॥ २१२ ॥ ममथस्या मया तात ! सेव्य पादाम्बुजद्वयम् । ततो मामनुजानीहि येन यामि सहैतया ॥ २१३ ॥
ततः सुमङ्गलारोदीद् राज्ञोचे देवि ! मा रुदः । करोत्वेतदियं माभ्यस्या विनोदोऽयमेव यत् ॥ २१४ ॥
स्थेय गृहस्थया किन्तु भगवत्यन्तिकेऽनया । दीक्षाग्रहणवार्तापि कार्या नास्मदपृच्छया ॥ २१५ ॥ महाप्रसाद
इत्युक्त्वा ततः सुललितापि सा । प्रावर्तत प्रवर्तिन्या सार्द्धं विचरितुं धराम् ॥ २१६ ॥ कर्म्मोदयवशात् किन्तु
कथ्यमानमपि स्फुटम् । सामाचार्यादिकं नैव बुध्यते किञ्चिदप्यसौ ॥ २१७ ॥ आयाताऽत्र महामन्त्रा पुरे शङ्ख-
पुरेऽन्यदा । नन्दस्य श्रेष्ठिनो यक्षशालायामभ्युवास च ॥ २१८ ॥ इतश्चात्र पुरे राजा श्रीगर्भो मम मातुलः ।
महामन्त्रामातृष्वसा कमलिन्यस्य च प्रिया ॥ २१९ ॥ उपयाचितकादीनि भूयांसि तनयार्थिनी । चक्रे भूपप्रिया
सा च किमार्थः कुरुते न हि ? ॥२२०॥ भवितव्यतया सोऽथ कृतपुण्यः कुलन्धरः । तस्याः प्रविष्टः कुक्षौ दृष्टः
स्वप्नोऽनया ततः ॥२२१॥ पुरुषः सुन्दराकारो मुखेनाङ्के प्रविश्य मे । निर्गत्य च गतः क्वापि नरेण सह केनचित्
॥ २२२ ॥ स चाख्यातस्तया भर्त्रे स्वप्नस्तेनोदितं ततः । भावी सुतस्ते किन्त्वाप्य गुरु स प्रव्रजिष्यति ॥ २२३ ॥
ततः कमलिनी तस्य मासेऽभ्यासास्तृतीयके । धर्म्मकृत्ये दोहदोऽभूभूपेन स च पूरितः ॥ २२४॥ पूर्णे काले ततो

जातः सुतोऽथ नृपतिर्मुदा । जन्मोत्सवं पौण्डरीक[1] इत्याख्यां चास्य निर्ममे ॥३२५॥ इतः समन्तभद्रोऽपि भगवान्
जातकेवलः । अत्र चित्तरमोद्याने समेत्य समवासरत् ॥ ३२६ ॥ पौरलोकोऽथ तं नन्तुं महाभद्रा च निर्ययौ ।
वन्दित्वा देशनां श्रुत्वा स्वं स्वं स्थानं जनेष्वथ । गतेषु
तमायातं सुललिता कथञ्चिद् बुबुधे न तु ॥ ३२७ ॥
भगवानेवं महाभद्रामभाषत ॥ ३२८ ॥ आर्ये ! तावन्नृपसुतः पौण्डरीकः क्रमादसौ । भविष्यति हि मे शिष्यः
[2]प्रशस्यगुणभाजनम् ॥ ३२९ ॥ ततो राजकुलं गत्वा राजसूनुरसौ त्वया । प्रतिचर्यः प्रतिदिनं तत्पित्रोरनुवर्त्तनात्
॥ ३३० ॥ तथेति प्रतिपद्याथ तद्वचः सा स्वमाश्रयम् । ययौ तच्च गुरोर्वाक्यं विधातुमुपचक्रमे ॥ ३३१ ॥
इतः सुललिता सापि विचरन्त्यन्यदाययौ । तत्र चित्तरमोद्याने सूरीन्द्रं तं ददर्श च ॥ ३३२ ॥ तमेवं च
तदा पौराः पप्रच्छुर्यदसौ प्रभो ! । वर्धमानः पौण्डरीकः कीदृग् भावी नृपात्मजः ? ॥ ३३३ ॥ सूरिरूचे क्रमादेष
वर्द्धमानो भविष्यति । गुणानामेक आधारो रत्नानामिव सागरः ॥ ३३४ ॥ किञ्चैष जनितः कर्म्मपरिणामेन
भूभुजा । शुभेन शुभया कालपरिणत्या च निश्चितम् ॥ ३३५ ॥ स्वयं च भव्यपुरुषः सुमतिश्चैष वर्त्तते । ततो
योक्ष्यत एवायं सर्वैरपि गुणैः क्रमात् ॥ ३३६ ॥ यदि बालं बहूक्तेन भूत्वासौ मत्समो गुणैः । भविष्यत्य-
चिरादेवं[3] भवतां नयनोत्सवः ॥ ३३७ ॥ तच्छ्रुत्वा तेषु सर्वेषु पौरेषु मुदितेष्वलम् । दध्यौ सुललिता सैवं विस्मया-
पूर्णमानसा ॥३३८॥ सर्वज्ञ इव को ह्येष भावानाख्याति भाविनः ? । कथं वा पौण्डरीकस्य पित्रोर्नामविपर्ययम् ?

---

१ पुण्ड° क० ख० ग० घ० । २ प्रशमगुणभाजनम् ता० । ३ °ष भ° ता० ।

॥ ३३९ ॥ पौण्डरीकाभिधानोऽपि भूमर्तुरपमारमजः । कथं सा भव्यपुत्र्यः सुमतिश्चेति शसितः ? ॥ ३४० ॥ एन
सन्देहसन्दोह वस्त्रस्यामि प्रपर्शिनीम् । स्वरूप सर्वभावानां वेत्ति प्रायम सा यतः ॥ ३४१ ॥ पर्यालोच्येति यसति
यस्या सुललिता ततः । मनश्चिन्तितमप्राक्षीन् महाभद्रां सविस्मया ॥ ३४२ ॥ उपायेनामुनैवास्या मुग्धायाः
श्रीजिनागमे । प्रीतिं संजनयामीति ध्यायन्ती साप्यदोऽवदत् ॥ ३४३ ॥ तत्र विपरमोद्याने भगवान् श्रीसदा
ममः । त्वया सुललिते ! मन्ये निन्ये नयनगोचरम् ॥ ३४४ ॥ यतो भूतभवद्भाविभावाभावावभासनम् । कर्तुं स
एव यथाधि ! यदिशः कोऽपि नापरः ॥ ३४५ ॥ कर्मपरिणामकलपरिणस्यद्धजन्मता । या पौण्डरीकमुद्दिश्य
तेनोक्ता सापि सुन्दरा ॥ ३४६ ॥ विधिवौ पितरौ यातौ यतो यद्यपि जन्मिनाम् । तथापि तत्त्वतस्तेषां तावेव
जनकौ मतौ ॥ ३४७ ॥ तौ विना हि न कोऽप्यन्यो विश्वमेतच्चराचरम् । क्षमः स्रष्टुं पौण्डरीकस्यापि तौ जनकौ
ततः ॥ ३४८ ॥ पौण्डरीकाभिधानोऽपि भव्यत्वाद् भव्यपूरुषः । सन्मतित्वाच्च सुमतिः समाख्यातश्च तेन सः
॥ ३४९ ॥ ततो धन्यासि कस्यापि ! कल्याणैकनिकेतनम् । सदागमः स भगवान् यया साक्षान्निरैक्ष्यत ॥ ३५० ॥
ममापि च महाभागे ! मायते परिकमप्यदः । तवस्य चरणाम्भोजसेवासंजनित फलम् ॥ ३५१ ॥ तदेव परमो
य गुरुः पिता माता महत्गुरुः । सर्वेषामपि सत्त्वानामिति भद्रे ! विभाव्यताम् ॥ ३५२ ॥ भयाचोपसुललिता
ललिताक्षरया गिरा । शार्दं भगवता तेन ममापि कुरु संस्तवम् ॥ ३५३ ॥ साधु साध्विति जल्पन्ती महाभद्राथ
तां द्रुतम् । तदभ्यर्णेऽनयत् तं च प्रणमय्य न्यषेदयत् ॥ ३५४ ॥ विलोक्याद्भुतमाकारं तस्याकम्प्य च

देशनाम् । बहुमानोऽभवद् भूपपुत्र्यास्तत्र सदागमे ॥ ३५५ ॥ अभ्यधाच्च महाभद्रां कृतार्था भगवत्यसि । यस्याः
परिचयोऽनेन पुरुषेण महात्मना ॥ ३५६ ॥ अहं तु मन्दभाग्यास्मि विश्वत्रितयबान्धवः । ददृशे यद् दृशाप्येष
नेयन्तं समयं यया ॥ ३५७ ॥ स्वार्थैकनिष्ठतां मन्ये तत्रापि भगवत्यहम् । यया न दर्शितः कालमियन्तं भग-
वानयम् ॥ ३५८ ॥ सम्प्रत्यपि ततो मेऽसौ दर्शनीयो दिने दिने । भवतीव भवाम्युच्चैर्येनाहमपि पण्डिता ॥ ३५९ ॥
भवत्वेवमिति प्रोक्ते प्रवर्त्तिन्याथ तद्युता । चक्रे सुललिता नित्यं भगवत्पर्युपासनम् ॥ ३६० ॥ लङ्घिते मासकल्पेऽथ
सूरिरूचे प्रवर्त्तिनीम् । क्षीणजङ्घाबलासि त्वं तिष्ठात्रैव ततोऽनघे ! ॥ ३६१ ॥ विहृत्य वयमन्यत्र कतिचिद्दिवसान्पुनः ।
भूयोऽप्यत्र समेष्यामः प्रतिजागरणाय ते ॥ ३६२ ॥ विशिष्टालम्बनं युष्मत्प्रतिजागर एव नः । अस्यापि मासकल्पस्य
करणेऽप्यत्र कारणम् ॥ ३६३ ॥ साधूनामन्यथा क्षेत्रे साध्वीभिः समधिष्ठिते । न विधातुं महाभद्रे ! मासकल्पोऽपि
कल्पते ॥ ३६४ ॥ त्वया च प्रतिचर्योऽयं पौण्डरीको निरन्तरम् । ज्ञानभारमिहारोप्य निजं स्यां येन निर्वृतः ॥ ३६५ ॥
इत्याख्यायान्यतो जग्मुर्विहर्तुमथ सूरयः । महाभद्रापि तच्छिक्षामादृता कुरुतेऽन्वहम् ॥ ३६६ ॥ पौण्डरीकोऽपि
हि महाभद्रायां स्निग्धमानसः । यथोदितगुणोपेतः क्रमाद्यौवनमासदत् ॥ ३६७ ॥ विहरन्तोऽथ भूयोऽपि सूरयस्ते
समाययुः । निनाय पौण्डरीकं च महाभद्रा तदन्तिके ॥ ३६८ ॥ भव्यत्वात्सुमतित्वाच्च भगवन्तं विलोक्य
तम् । निशम्य देशनां तस्य राजभूर्मुमुदेऽधिकम् ॥ ३६९ ॥ क एष भगवानेवमप्राक्षीच्च प्रवर्त्तिनीम् । तस्य
जैनागमे भक्तिं तन्वानाख्यत साप्यदः ॥ ३७० ॥ अतीन्द्रियज्ञाननिधिः सुरासुरनतक्रमः । तत्त्वज्ञैर्भगवान् भद्र !

प्रोच्यतेऽसौ सदागमः ॥ २७१ ॥ तारकाणामपि व्योम्नि गणना क्रियते बुधैः । न तु गीःपतिरप्यस्य शक्तो गणयितुं गुणान् ॥ २७२ ॥ रत्नचूडस्ततोनाथ यथैवं भगवत्यहम् । आगमार्थं जिघृक्षामि पार्श्वेऽस्यैव दिवानिशम् ॥ २७३ ॥ महामन्त्रापि तद्वाक्यं श्लाघमाना न्यवेदयत् । तस्मिन्नोस्तदभिप्राय गत्वा सत्वरमेव तम् ॥ २७४ ॥ ततस्तामपि सानन्दो गत्वा भगवतः सुतम् । अर्प्पयामासतुर्भक्त्या सिद्धान्ताभ्यासहेतवे ॥ २७५ ॥ पौण्डरीकस्तत स्तस्य पार्श्वे भगवतः सुधीः । सिद्धान्ततत्त्वमादत्ते गुरुस्योचितमन्वहम् ॥ २७६ ॥ अथान्यदात्रैव वने मनोनन्दन नामनि । चैत्ये च सद्धमभ्यस्ते प्रभौ वन्दति देवनाम् ॥ २७७ ॥ महामन्त्रासुललितापौण्डरीकेषु तेषु च । तत्पुरो विनिविष्टेषु मत्सैन्यतुमुलोऽभवत् ॥२७८॥ युग्मम् ॥ तत्कर्णायां तमाकर्ण्य आतापामिह पर्षदि । महामन्त्रीं सुललिता पप्रच्छ किमिदं ननु ? ॥ २७९ ॥ जाने नाहमिति तया प्रोक्तेऽथ भगवानसौ । सुललितापौण्डरीकप्रबोधाया भ्यधत्त ताम् ॥२८०॥ महाविशाले ! मुग्धेव किं न वेत्सि स्वमप्यदः ? । तावन्मनुजगत्याख्या विख्याता पदियं पुरी ॥ २८१ ॥ महाविदेहरूपोऽयं हट्टमार्गश्च विश्रुतः । यत्र सान्प्रतमासीनाः सर्वेऽपि वयमास्महे ॥ २८२ ॥ नृपातः कर्म्मपरीणामनामा चात्र महीपतिः । विदिता कालपरिणत्यभिधा तस्य च प्रिया ॥ २८३ ॥ संसारि जीवनामाय तस्करोऽथ सलोप्त्रकः । प्राप्य राज्ञेऽर्प्पितो दुष्टाशयाद्यैर्दण्डपाशिकैः ॥ २८४ ॥ तदाज्ञयाधुना त्वन्तु पापिपञ्जरनामके । वध्यस्थाने स तेमोरो हट्टमार्गेण नीयते ॥ २८५ ॥ नीयमानस्य तस्यायं डिण्डिम धनिसंकुलः । भूपते विहितो कालेसुसस्तुमुलोऽन्वये ! ॥ २८६ ॥ मुग्धा सुललिता साथ तामुवाच प्रवर्तिनीम् ।

॥ ३८७ ॥ पुरं शङ्खपुरं चैतद्विख्यातं न तु सा पुरी। वनं चित्तरमं चेदं
महाभद्रा नहि प्रज्ञाविशाला भगवत्यसि कमलिन्यस्य नो कालपरिणत्यभिधा
हृद्बुमार्गस्तु नैव सः ॥ ३८८ ॥ श्रीगर्भश्चात्र नो कर्मपरिणामो महीपतिः। अपूर्वमिव मे सर्वमिदं हि प्रतिभासते ॥३९०॥
प्रिया ॥३८९॥ तत्किमित्येष भगवान् समाख्याति ? निवेदय ?। सर्वथा ॥ ३९१ ॥ स्थिरा भव ततो
प्रोचेऽथ भगवानेवं परमार्थं न बुध्यसे। वत्सेऽगृहीतसङ्केता यतस्त्वमसि ही ममाप्यपरं नाम कृतं भगवते-
येन भवत्यपि शनैः शनैः। पृष्टमर्थमिमं नून सर्वमप्यवभोत्स्यते ॥ ३९२ ॥ महाभद्रा त्वचिन्तयत्। पापः
त्यथ। चिन्तयित्वा सुललिता बाढं हृदि विसिष्मिये ॥ ३९३ ॥ विज्ञातसूरिवाक्यार्था शक्यो मोच-
कोऽप्येष निर्दिष्टः प्रभुणा नरकंगमी ॥ ३९४ ॥ ततः सा जातकारुण्या भगवन्! कथमप्यसौ। मत्समीपागमाच्चास्य
यितुं चौरो नवेति प्रभुमभ्यधात् ॥ ३९५ ॥ प्रभुरप्येवमाचख्यावार्ये! त्वदवलोकनात्। मत्पार्श्व-
मोक्षोऽवश्यं भविष्यति ॥ ३९६ ॥ महाभद्राह याम्यस्याभिमुखं भगवन्नहम्। गच्छेति प्रभुणा प्रोक्ते भगवत्पार्श्वमेतया
मियमाययौ ॥ ३९७ ॥ सदागममिमं भद्र! शरण्यं शरणं श्रय। इत्युक्त्वा चाहमानीतो प्रभुणा-
॥ ३९८ ॥ ददृशे पर्षदा चैवं तस्कराकारधारकः। मयापि शरणत्वेन प्रपन्नो भगवानसौ ॥ ३९९ ॥ भगवत्प्रभृतीनां
श्वासितश्चाहं नष्टास्ते राजपूरुषाः। पृष्टस्त्वयाहं वृत्तान्तं कथितोऽसौ मया तव ॥ ४०० ॥ येनायं सत्यमेवाख्यातीति
च वृत्तान्तो विदितोऽप्यसौ। स्वसंवित्तिनिमित्तं ते मया भद्रे! निवेदितः ॥ ४०१ ॥ साह बाढमभूदात्मगोचरः केवलं
सर्वत्र जायते। प्रत्ययस्ते मदाख्याते तत्तेऽभूत् प्रत्ययोऽधुना ? ॥ ४०२ ॥

पदि। अनुसुन्दरचक्री स्वं तत्कथं चौररूपभृत् ? ॥ ४०३ ॥ स प्राह सुभयोर्भद्रे ! प्रतिबोधनहेतवे। तस्करस्य
मया रूपं विदधे नटिरम्यदः ॥ ४०४ ॥ यतोऽहमान्तरं चौर्यमुद्दिश्य भवतां पुरः। प्रमुमास्यातः संसारि
जीवनामा मलिम्लुचः ॥ ४०५ ॥ ततोऽस्यां महाभद्रायां गतायां सम्मुखं मम। तद्दर्शनाच्च संजाते प्रबोधे चिन्तितं
मया ॥ ४०६ ॥ वेत्ति प्रज्ञाविशालेयं महाभद्रा हि यद्यपि। इदं मगधरावितं तस्करस्य ममान्तरम् ॥ ४०७ ॥
तथापि ग ममप्यस्य वेत्ति व्यतिकरस्य न। सुललिता साऽप्यतीवसद्देतायापि निश्चितम् ॥ ४०८ ॥ युग्मम् ॥
ततो विलोक्य मां चक्रवर्तिरूपमुत मृतम्। सदागमवचस्यस्या विसंवादो भविष्यति ॥ ४०९ ॥ किञ्चाय पौण्ड
रीकोऽपीत्थमेव प्रतिभोत्स्यते। यतोऽसौ भव्यपुरुषः सुमतिश्चापि वर्तते ॥ ४१० ॥ विचिन्त्येत्यन्तरङ्गात्मस्वरूपा
वेदकं मया। रूपं वैक्रियकरुपेदृग् विदधे नटिरम्यदा ॥४११॥ ततः सुललिता प्राह कीदृक् तच्चौर्यमान्तरम्। यत्कृत
भवता ? तत्र कथं चेदृग् विडम्बना ? ॥ ४१२ ॥ वेत्ति स्वस्य परेषां च कथं वा चरितं भवान् ?। तदतस्कथ्यतां
सर्वं चक्रवर्ती ततोऽभवत् ॥ ४१३ ॥ अन्त्यग्रैवेयकायावत् सुकच्छविजयेऽभवम्। क्षेमपुर्यां युगन्धरनलिनी
सोऽनुसुन्दरः ॥ ४१४ ॥ अत्रान्तरे महामोहप्रमुखानखिलानपि। इत्थं प्रोत्साहयामास भद्रे ! सा भवितव्यता
॥ ४१५ ॥ सम्यग्दर्शनदुःस्थो यावदेषोऽनुसुन्दरः। यतध्वं तावदेवात्र भूय भोः ! स्वार्थसिद्धये ॥ ४१६ ॥
अन्यथा प्राप्य तं क्वापि परिपोष्य निजं बलम्। भवतां प्राग्वदेवायं बाधाकारी भविष्यति ॥ ४१७ ॥ ततश्च
चेष्टितो विषग् बाल्यादारभ्य तैरहम्। विस्मृताशेषसम्यक्त्वः पुनस्तन्मयतां गतः ॥ ४१८ ॥ कौमारे यौवने

चक्रवर्त्तित्वे च ततो मया । मांसाशनसुरापानाद्यकृत्यं किं न्यधायि न ? ॥ ४१९ ॥ एवं च वर्त्तमानेन मया ते
भावशत्रवः । विस्मृत्य पूर्ववृत्तान्तं बन्धुबुद्ध्यावधारिताः ॥ ४२० ॥ तैः प्राप्तप्रसरैश्चित्तवृत्तिर्मलिनिताथ मे ।
चारित्रधर्म्मराजस्य निरुद्धं चाखिलं बलम् ॥ ४२१ ॥ तिरोहितं च तत् क्षान्तिमुख्यान्तःपुरमान्तरम् । जातं कर्म्म-
परीणामराज्यं पापोदयोऽस्फुरत् ॥ ४२२ ॥ विस्फूर्जितं महामोहसैन्यं स्वस्वपुराणि च । संस्थापितानि पूरेणात्रहत्
सिन्धुः प्रमत्तता ॥ ४२३ ॥ तद्विलसितमुख्यानि सज्जितान्यखिलानि च । किं बहूक्तेन सामग्री सर्वा साभूत्पुनर्नवा
॥४२४॥ पर्यालोचेऽथ विषयाभिलाषः स्वानभाषत । भो ! भोः ! सर्वे महीपालाः ! संचिन्तयत मद्वचः ॥ ४२५ ॥
मन्दादरात्पुरा नाशं वीक्ष्य तादृक्षमात्मनः । मन्दादरो न युक्तो वः साम्प्रतं कर्तुमत्र भोः ! ॥४२६॥ दृष्टदाहास्ततो
यूयं यतध्वमधुना तथा । नित्यं निष्कण्टकं राज्यं युष्माकं जायते यथा ॥ ४२७ ॥ ते प्रोचुरिष्टतद्वाक्याः किमत्र
क्रियते पुनः ? । सचिवोऽप्यभ्यधादेतदेतच्च क्रियतामिह ॥ ४२८ ॥ ततस्तदुपदेशेन प्रोत्साह्य स्वयमेव तैः । ग्राहि-
तोऽहमिति प्राज्यं वर्गणाभिर्विनिर्मितम् ॥ ४२९ ॥ द्रव्यजातमकुशलनामकं क्षेत्रसंस्थितम् । तस्य कर्म्मपरीणाममही-
पालस्य सुन्दरि ! ॥ ४३० ॥ युग्मम् ॥ ततस्तैस्तस्करत्वेन ज्ञापिते मय्यसौ नृपः । प्रोचे यथा विडम्ब्यैष
मार्य्यतां पापिपञ्जरे ॥ ४३१ ॥ तन्निशम्य महामोहादिभिः सर्वैः प्रमोदिभिः । परिलिप्तः कर्म्ममलभस्मना
चर्चितस्तथा ॥ ४३२ ॥ राजसैर्गैरिकहस्तैर्मषीपुण्ड्रैश्च तामसैः । रागकल्लोलमालाख्यकणवीरस्रजार्चितः ॥ ४३३ ॥
विडम्बितः कुविकल्पततिशरावमालया । पापातिरेकपिटकखण्डेन च विनाटितः ॥४३४॥ आरोपितोऽसदाचाराभिधे

महति रासभे । महाश्मशलोप्यम स्वरूपगलकन्दले ॥ ४३५ ॥ दुष्टाश्वयादिभिर्दुष्टपुरुषैः परिवेष्टितः । कषायाभि
परिम्लानो तद्वचैराकुलीकृतः ॥ ४३६ ॥ अन्यादिभोगनिरसविम्बिसमथानिलाषितः । पापलोकविलासाश्रयपुर्दी
न्याहिताकुलः ॥ ४३७ ॥ महाविदेहरूपाड्मार्गेणाह स्वनीयताम् । दर्शनच्छपना निःसारितो सम्यगेव प्रति
॥ ४३८ ॥ सप्तभिः कुलकम् ॥ ततानीतस्य देशेऽत्र युष्माभिर्मम स भुवः । सैन्यकोलाहलो यावन्महाभद्रा
पगाम माम् ॥ ४३९ ॥ इत्याह तदा पश्चात् त्यक्त्वा सैन्यं स्वलीलया । सम्प्रापमिदमुद्यानं रासभश्चमवेष्टितः
॥ ४४० ॥ ततो वनप्रिय द्रुमपीर्व्येन महेभतः । आगच्छन्ती मया भद्रे ! महाभद्रा विलोकिता ॥ ४४१ ॥
ततोऽस्याः प्रागभ्यासात् बहुमानोऽभवन्मम । तयापि मयि सस्नेहा निःस्पृहाप्यभवत् दृशम् ॥ ४४२ ॥
मया नमस्कृता दत्ता धर्मलाभाशिष ततः । वैराग्यकारिणो मह्यमुपदेशानसौ ददौ ॥ ४४३ ॥ जातिस्मरणमस्याश्च
यद्वे मद्दर्शनात् । ततोऽपि पापविज्ञान विशुद्धाध्यवसायतः ॥ ४४४ ॥ तद्वशाच्च विशुद्धासमस्पर्शमचेष्टिता ।
निदेशान्मुपदेशान्मे यावदेषा प्रयच्छति ॥ ४४५ ॥ तावन्मार्गे क्षिपद्वर्गे निर्मिथ प्रतिरोधकम् । सम्यग्दर्शनसद्बोधौ
मत्समीपमुपेयतुः ॥ ४४६ ॥ युग्मम् ॥ ततो ममापि समभूदीहापोह प्रकर्षतः । जातिस्मृतिस्तयास्मार्षमस्यां
मोक्षधारिणीम् ॥ ४४७ ॥ ततोऽप्युपायतो प्रोक्तममायस्य मेऽन्वितम् । समोधमित्रमथचिनिर्नित्यात्मविरोधि
नम् ॥ ४४८ ॥ ततो दृष्टा मयार्यस्या दीयाविपक्षमथास्तथा । पेसृतं सर्वं मूत सिद्धापार्श्वकाशोरसीकृतम्

१ 'धारिणीम् क० स० ग० घ० । २ भूतं ता० ।

॥ ४४९ ॥ निर्मलाचार्यनिर्दिष्टः परिस्फुट इवात्मनः । समस्तोऽपि हि संसारविस्तारो विदितस्तथा ॥ ४५० ॥
वहिरेण्यथ पूर्वोक्तहेतुना चौररूपभृत् । महाभद्रामभेतोऽत्र समायामहमाययौ ॥ ४५१ ॥ ततश्च त्वां सुललिते !
ज्ञात्वा मदनमञ्जरीम् । पूर्वस्नेहात् कृपातश्च त्वत्प्रबोधनहेतवे ॥ ४५२ ॥ प्रभुप्रमादाद्विज्ञात मया सकलमप्यदः ।
एवं सदागमे प्रीतिं तवोत्पादयता मया ॥ ४५३ ॥ षण्मासकथनीयोऽपि प्रभोरेव प्रसादतः । त्रियामेयं निज-
भवप्रपञ्चोऽयं निवेदितः ॥ ४५४ ॥ विशेषकम् ॥ भद्रे ! तदीदृक् तच्चौर्यं तत्रेदृक् च विडम्बना । अहमेवं न वृत्तान्तं
वेद्मि स्वस्य परस्य च ॥ ४५५ ॥ निशम्येदं सुललिता भृशं हृदि विसिष्मिये । किञ्चिद्विज्ञातभावार्थः पौण्डरीकोऽ-
ब्रवीदथ ॥ ४५६ ॥ किमार्य ! चित्तवृत्तौ ते वर्त्तते साम्प्रतं पुनः । ततोऽनुसुन्दरः प्राह ममाकर्णय सुन्दर !
॥ ४५७ ॥ यावत्संवेगमापन्नः प्रारब्धो निजचेष्टितम् । निवेदयितुमित्थं भोः ! पुरतो भवतामहम् ॥ ४५८ ॥
तावच्चारित्रधर्मोऽसौ स्वसैन्यपरिवारितः । प्रस्ताव इति विज्ञाय चलितो मम संमुखम् ॥ ४५९ ॥ तेन चागच्छ-
तानन्दि पुरं सात्त्विकमानसम् । विवेकाद्रिप्रमत्तत्वशिखरादि च सज्जितम् ॥ ४६० ॥ आगच्छतश्च मार्गेऽस्य
महामोहादिभिः सह । लग्नमायोधनं तच्च दृष्टं प्रत्यक्षतो मया ॥ ४६१ ॥ ततः सद्बोधयुक्तेन सम्यग्दर्शनसंयुजा ।
जयी चारित्रधर्मोऽसौ मयावष्टम्भितोऽभवत् ॥ ४६२ ॥ ततश्चादाय तत्सैन्यं क्षान्त्याद्यन्तःपुरं मम । मुदितः
सपरिवारः स मदन्तिकमाययौ ॥ ४६३ ॥ महामोहादयस्ते तु लीनास्तस्थुर्मृतोपमाः । चित्तवृत्तानिदं भद्र ! वर्त्तते

१ °रत्यर्थपू° क० ख० ग० घ० । २ °ग् मचौर्यं ग० ।

भूत्तदेदृशः । महाभद्रामिमां पृष्ट्वा भोत्स्ये भावार्थमस्य यत् ॥ ४७९ ॥ यावतेमां सुललितां शिष्यमाणां निशम्य मे । जज्ञे कश्चिदनाख्येयो हर्षो जातिस्मृतिस्तथा ॥ ४८० ॥ भूतपूर्वोऽहमेतस्य सुहृन्नाम्ना कुलन्धरः । श्रुतो भवप्रपञ्चोऽस्य तदा निर्मलसूरितः ॥ ४८१ ॥ ततोऽनेन स एवायमेवमाख्यार्थ्यतोऽधुना । त्रुटितो मम सन्देहो विरक्तं च भवान्मनः ॥ ४८२ ॥ ततो मामनुजानीत येनाहममुना सह । दीक्षां गृह्णामि तच्छ्रुत्वा कमलिन्यरुदत्प्रसूः ॥ ४८३ ॥ प्रोचे श्रीगर्भराजोऽथ मा रोदीर्देवि ! यत्सुतः । स्वप्नसूचितजातोऽयं धर्मं साधयिता ध्रुवम् ॥ ४८४ ॥ तन्नास्य धारणं युक्तमावयोः किन्तु युज्यते । अनुव्रजनमेवास्य निर्मिथ्यस्नेहसूचकम् ॥ ४८५ ॥ बालश्चेत् कुरुते धर्म्ममेष भोगसुखोचितः । ततः किं युज्यते स्थातुमावयोर्भवचारके ? ॥ ४८६ ॥ देव्यूचे देव ! चारूक्तं प्रतिभातमिदं मम । ततोऽनुज्ञाय तौ पुत्रं दीक्षामादातुमुद्यतौ ॥ ४८७ ॥ तदा च द्रावितात्यर्थमनुसुन्दरभाषितैः । ससंभ्रमा च तद्वीक्ष्य पौण्डरीकादिचेष्टितम् ॥ ४८८ ॥ कृताञ्जलिः सुललिता महाभद्रामभाषत । किं मयाघं पुराकारि येन जाताहमीदृशी ? ॥ ४८९ ॥ युग्मम् ॥ धन्योऽयं [2]पौण्डरीकस्तु क्षणमात्रेण योऽभवत् । विज्ञातसर्वभावार्थः प्रसङ्गश्रवणादपि ॥ ४९० ॥ साक्षादुद्दिश्य मामेव कथ्यमानमपि स्फुटम् । अहं पुनर्न जानेऽत्र भावार्थं पशुसन्निभा ॥ ४९१ ॥ तदिदं मे महाभागे ! स्वयं यद्वा सदागमम् । पृष्ट्वा कथय निःशेषं कस्य पापस्य जृम्भितम् ? ॥ ४९२ ॥ ततस्तां तादृशीं दृष्ट्वा बाष्पपूरितलोचनाम् । कृपावेशवशादेवमब्रवीदनुसुन्दरः ॥ ४९३ ॥ स्वदुष्कृतस्य

१ °यतेऽधुना क० ग० घ०, °यितोऽधुना ख० । २ पुण्ड° क० ख० ग० घ० ।

विज्ञाता मुग्धे ! यथास्ति ते ततः । अहमेव तदाख्यामि श्रूयतां सादरं त्वया ॥ ४९४ ॥ तात्र मदनमञ्जर्या तस्याः संजातभावया । मयस्या अगृहे दीक्षा विधिवत् पालिता च सा ॥ ४९५ ॥ केवल तत्र सञ्जाता तदा दुर्बुद्धि रीदृशी । क्रियतां कार्यमेवात्र रोलेन बहुना किम् ? ॥ ४९६ ॥ ततस्ते रूपे नैव स्वाध्यायसुधुलस्तदा । केवल समभूदिष्टा निद्रा मौनमवं तथा ॥ ४९७ ॥ न च ते तत्र संवासोऽभिनिवेशो महान् हृदि । यतो न प्रत्यनीकत्व ज्ञानज्ञानवतां कृतम् ॥ ४९८ ॥ ततोऽनया लघीयस्या श्रुताशातनया तदा । त्वया सुललिते ! कर्म्म समुपार्जित मीदृशम् ॥ ४९९ ॥ भ्रान्तासि यत्प्रभावेणासंख्य कालं भवार्णवे । एवंविधा च जातासि जडधीरधुनापि हि ॥ ५०० ॥ किञ्च पूर्वभवाभ्यासो याति जन्मान्तरेष्वपि । पुरुषद्वेषिणी येनेहापि जातासि पूर्ववत् ॥ ५०१ ॥ अत एव सखीभिस्त्व ब्रह्मचर्यरता सती । मातृमीस्युदिता तर्स्कि प्रत्ययस्ते भिलत्यसौ ? ॥ ५०२ ॥ सा जगाद भगवाज्ञ किं नो मीलति ? किन्त्वहम् । मामतोऽन्यनिभोचापि पर्वेऽत्र माग्यवर्जिता ॥ ५०३ ॥ इत्युक्त्वाभूमि वर्तन्ती सा जगादानुसुन्दरः । मा विषीदानघे ! क्षीणप्राय तत् कर्म्म तेऽधुना ॥ ५०४ ॥ सदागममिम मत्त्या सम्यगाराधयानघे ! । अज्ञानतिमिरध्वंसस्रूर्यो हि भगवानयम् ॥ ५०५ ॥ एवंविधैस्ततस्तस्य वचनैः पवनैरिव । सन्धुक्षितः प्रवद्धे तस्याः संवेगपावकः ॥ ५०६ ॥ ततः सदागमो येष इति बुद्ध्या निपत्य सा । सूरेः समन्त भद्रस्य पदयोरभ्यधादिति ॥ ५०७ ॥ अज्ञानपङ्कमग्नाया जगन्नाथ ! सदागम ! । त्वमेव मन्दभाग्याया ममो

१ कि पुनः ता० । २ °मा चापापि पर्वे मा° त० ।

स्तारणवत्सलः ॥ ५०८ ॥ शरणं[1] त्वं महाभाग ! त्वं स्वामी त्वं च मे पिता । तदेष विमलो नाथ ! क्रियतां किङ्करो
जनः ॥ ५०९ ॥ एवं वदन्त्याः संवेगात् तस्याः कर्म्मात्त्रुटद् बहु । जज्ञे पादप्रणताया एव जातिस्मृतिस्ततः
॥ ५१० ॥ समुत्थाय पपाताथ सानुसुन्दरपादयोः । भद्रे ! किमेतदेवं च ? तेनोक्ता प्रत्यभाषत ॥ ५११ ॥
यत्प्रभोर्भवतश्च स्यात् प्रसादात्तदभून्मम । यतो जातिस्मृतिर्जाता त्वद्वचो[3]निर्णयस्तथा ॥ ५१२ ॥ विरतं भव-
वासाच्च मच्चित्तं चक्रयथावदत् । आर्येऽसावनुगृह्णाति स्वभक्तं भगवान् ध्रुवम् ॥ ५१३ ॥ यतोऽहं प्रभुणानेन नरकं
प्रति गामुकः । भावचौर्येण बद्धोऽपि साक्षादेवं विमोचितः ॥ ५१४ ॥ कृच्छ्रेण किल बुद्धाहं मन्दभाग्येति चिन्तया ।
न चावभावना कार्या त्वया भद्रे ! स्वगोचरे ॥ ५१५ ॥ यतोऽहमपि तैः पूर्वमकलङ्कादिभिस्तदा । न बोधितो
यदासीन्मे प्रबलं भूरिपातकम् ॥ ५१६ ॥ यदा ह्यस्य विलीयेत पापं कालादिहेतुभिः । जीवस्तदा प्रबुध्येत गुरवः
सहकारिणः ॥ ५१७ ॥ प्रोचे सुललितापीदं सत्यमेवार्य ! केवलम् । प्रतिपन्नं मया पित्रोरेतदस्ति स्वकीययोः
॥ ५१८ ॥ दीक्षानामापि यद् ग्राह्यं नाननुज्ञातया मया । तदार्य ! तत्कथं भावि ? चक्रवर्त्ती ततोऽभ्यधात्
॥ ५१९ ॥ मा भैषीरागतावेव भद्रे ! स्तः पितरौ तव । अत्रान्तरे[4] च तौ तत्रैवायातौ सपरिच्छदौ ॥ ५२० ॥ ततो
नत्वा जिनं सूरिं साधूंश्चक्रधरं तथा । पुत्र्या कृतानतिर्भूपाविक्षन्मगधसेनराट्[5] ॥ ५२१ ॥ सुमङ्गलापि विहितसमस्त-
प्रतिपत्तिका । सुतामाश्लिष्य तत्पार्श्वे निषद्य च जगाद ताम् ॥ ५२२ ॥ वत्से ! समुत्सुकत्वेन तव दर्शनलालसौ ।

१ शरणस्त्वं ग० । २ नाम क्रि॰ क० ख० ग० घ० । ३ तद्वचो॰ ता० । ४ तत्रा॰ ता० क० ख० घ० । ५ ॰भूपोऽवि॰ ग० ।

कृतार्चा च नरामरैः ॥ ५३९ ॥ एष मे धर्म्मदायीति पूर्वस्नेहाच्च किञ्चन। विधिनात्यजन्। तदङ्गं साधवस्तस्य कृतार्चा च नरामरैः ॥ ५४० ॥ आर्ये! न शोचनीयोऽसौ महाभागोऽनुसुन्दरः। येनैकदिन-शोचन्तीं तां सुललितां प्रत्यूचुरथ सूरयः ॥५४०॥ आर्ये! न शोचनीयोऽसौ महाभागोऽनुसुन्दरः। येनैकदिन-

भवेदसौ ॥५४२॥ यः पुनः प्राप्य सद्धर्म्मं निर्द्धूय निजकल्मषम्। सर्वार्थसिद्धे सम्प्राप्तो नासौ शोकस्य गोचरः
॥ ५४३ ॥ अन्यच्चायं ततश्च्युत्वा पुष्करार्द्धस्य भारते। अयोध्याधीशगान्धारतनयः पद्मिनीभवः ॥ ५४४ ॥
भूत्वा नाम्नामृतसारो दीक्षां चादाय शुद्धधीः। विपुलाशयगुर्वन्ते करिष्यति चिरं तपः ॥ ५४५ ॥ युग्मम् ॥
चितवृत्तौ ततस्तस्य क्षान्त्याद्यन्तःपुरं पुनः। तच्च चारित्रधर्म्माद्यं सैन्यमाविर्भविष्यति ॥ ५४६ ॥ ततस्तत्पालयन्
राज्यं विद्विषस्तान्निहत्य सः। आरूढः क्षपकश्रेण्यां केवलालोकमाप्स्यति ॥ ५४७ ॥ कृत्वाथान्ते समुद्घातं शैलेशीं
प्राप्य च क्रियाम्। हत्वा शेषान् द्विषस्तांश्च गन्तायं पुरि निर्वृतौ ॥५४८॥ निजबान्धवसम्पूर्णः सिद्धानन्तचतुष्टयः।
तत्र चैव सदाकालं भोक्ष्यते राज्यसत्फलम् ॥ ५४९ ॥ इतश्च तेन सा त्यक्ता तदानीं भवितव्यता। महामोहबले
क्षीणे शोकमेवं करिष्यति ॥ ५५० ॥ दुर्बुद्ध्या बत जातैवमहं भग्नमनोरथा। महामोहबलेऽभूवमध्रुवे या कृतादरा
॥ ५५१ ॥ यद्वा ममापि को दोषो? रूढेयमपि वर्तिनी। यन्मुह्यत्येव लोकोऽयं समस्तः स्वप्रयोजने ॥ ५५२ ॥
एवं निश्चित्य साशेषैंलोकं व्यापारयिष्यति। तदेवं सति शोच्योऽयं न महात्मानुसुन्दरः ॥ ५५३ ॥ तच्च श्रुत्वा

१ गन्धा° ग०। २ सारं भो° ता०। ३ वर्तनी ता० ख०। ४ °ते च लो° ग०। ५ °षं लोकं ता०।

सुललिता माला शोकविवर्जिता । परितुष्टाश्च ते सर्वे पौण्डरीकादिसाधवः ॥५५४॥ तपांसि नानारूपाणि स्वात्मनः
शुद्धिहेतवे । चक्रे सुललिता साथ सर्वदा गुर्वनुज्ञया ॥ ५५५ ॥ एवम् पौण्डरीकोऽपि गीतार्थः समभूत् क्रमात् ।
पप्रच्छ चैवमन्येद्युः सूरिं विरचिताञ्जलिः ॥ ५५६ ॥ भदन्त ! प्रवचनस्य किं सारमिति कथ्यताम् ? । सूरिः
प्रोवाच सारोऽत्र ध्यानयोगः सुनिर्मलः ॥५५७॥ मूलोत्तरगुणाः सर्वे सर्वा चेयं बहिष्क्रिया । मुनीनां श्रावकाणां
च ध्यानयोगार्थमीरिता ॥५५८॥ मनःप्रसादः साध्योऽत्र मुक्त्यर्थं ध्यानसिद्धये । अहिंसादिविशुद्धेन सोऽनुष्ठानेन
साध्यते ॥ ५५९ ॥ तच्छ्रुत्वा पुनरप्याह पौण्डरीकमहामुनिः । यद् भदन्त ! मया क्वापि दृष्टाः सर्वे कुतीर्थिकाः
॥ ५६० ॥ ततो मे सर्वं स्वमतस्य मतं तैरप्यनेकधा । परं तत्त्वमिह ध्यानयोग एव निवेदितः ॥ ५६१ ॥
तत् किं सर्वेऽपि ते तीर्थ्या भवेयुर्मोक्षसाधकाः ? । ध्यानयोगेन यद्येष सारः परिस्थापवत् ॥ ५६२ ॥ आर्य !
सामान्यगीतार्थस्त्वमेवं तेन भाषसे । विशेषतो न विज्ञातमेतद्यथा जिनागमे ॥ ५६३ ॥ एते हि तीर्थ्याः सर्वेऽपि
दृष्टैवमसमानकाः । जिनसद्वैद्यशास्त्रस्य पल्लवग्राहिणो मताः ॥ ५६४ ॥ यथा चात्र क्वचिदेकत्र पुरे रोगिजनाकुले ।
मत्स्येकः संहितासारः दिव्यज्ञानी महाभिषग् ॥५६५॥ तद्वचः प्रतिपद्यन्ते केचिद् धन्यतमा जनाः । भजन्त्यनेन
कश्चिच्च न तदाकर्ण्यापन्यपि ॥ ५६६ ॥ निजेभ्यः स च शिष्येभ्यो व्याख्यानं कुरुते सदा । तत्रोपश्रुत्यान्यैः पूर्वैः
किमप्यनधारितम् ॥५६७॥ ततस्तभिभया तैः स्वप्रमार्थं संहिता निजाः । विधाय वैद्यकं कर्तुमारब्धं समन्ततः

१ भेष च प्र० ।

॥ ५६८ ॥ अन्यैस्तु पण्डितंमन्यैः संहिताश्चक्रिरे निजाः । महावैद्यस्य वचसां प्रतीपा इव सर्वथा ॥ ५६९ ॥
विचित्ररुचयो लोका रोगिणस्ते तु केचन । केषाञ्चित् कूटवैद्यानां रज्यन्ते वचनेऽन्वहम् ॥ ५७० ॥ ततः प्रसिद्धि
सर्वेऽपि ते कूटभिषजो ययुः । व्याचख्युश्च स्वशिष्येभ्यः संहितास्ता निजा निजाः ॥ ५७१ ॥ स्थिते चैवं महावैद्ये
मृतेऽप्येतेऽत्र रोगिणः । मुच्यन्ते तद्विनेयोपदिष्टं विदधतो गदैः ॥ ५७२ ॥ ये पुनः कूटवैद्यानां तच्छिष्याणां च
गोचरम् । गतास्ते रोगिणोऽत्यन्तं बाधिता [2]विविधैर्गदैः ॥ ५७३ ॥ तद्वाक्यादपि यत्तु स्यात्कस्यचिद् रोगतानवम् ।
स महावैद्यवचनलवसंजनितो गुणः ॥ ५७४ ॥ यतः स एव वातादिदोषत्रितयभेषजम् । महावैद्यो विजानाति न
कूटभिषजः पुनः ॥ ५७५ ॥ कार्यात्र योजना त्वेवमिह तावद् भवः पुरम् । बोद्धव्या रोगिणो लोकाः पुनः कर्म्म-
प्रपीडिताः ॥ ५७६ ॥ सिद्धान्तसंहितास्रष्टा केवलालोकभास्करः । महावैद्योऽत्र विज्ञेयः सर्वज्ञः परमेश्वरः ॥ ५७७ ॥
तद्वचः प्रतिपद्यन्ते केचिदप्यल्पकर्म्मकाः । प्राज्यपापाः पुनर्जीवा न तन्निशमयन्त्यपि ॥ ५७८ ॥ भगवांश्चैष सम-
वसरणस्थो यथातथम् । मोक्षमार्गं स्वशिष्येभ्यः प्ररूपयति सर्वदा ॥ ५७९ ॥ प्रसङ्गेनागतास्तत्र शृण्वन्ति
कलुषाशयाः । केचित्तां भगवद्वाचमनेकनयसंकुलाम् ॥ ५८० ॥ तन्मध्ये चास्तिकैः सांख्यादिभिः शास्त्राणि
चक्रिरे । दयादानादिगर्भाणि भगवद्वाक्यनिश्रया ॥ ५८१ ॥ नास्तिकैस्तु महापापैर्बृहस्पतिसुतादिभिः । सर्वं सर्वज्ञ-
वाक्यस्य विपरीतं विकल्पितम् ॥ ५८२ ॥ नानारुचित्वाल्लोकाश्च रज्यन्ते केऽपि केषुचित् । ततः सर्वेऽप्ययु[3]र्लोके

१ एव ता० । २ विविधैर्महैः क० ग० घ० । ३ °गुर्लोके ग० ।

प्रसिद्धिं ते कुतीर्थिकाः ॥ ५८३ ॥ स्थिते चैव निर्वृतेऽपि सर्वज्ञेऽमी शरीरिणः । मुच्यन्ते कर्मभिर्वर्धमानास्तच्छि-
ष्यमार्गिते ॥ ५८४ ॥ ये तु तेषां कुतीर्थ्यानां तच्छिष्याणां च गोचरम् । गच्छन्ति ते प्रपीड्यन्ते कर्मभिर्विविधै
र्भृशम् ॥५८५॥ तद्दूरात्त्यजेत् यत्र स्यात् कस्यचित्कर्मठापचम् । प्रमाणो भगवद्वाक्यलेशस्यैव स निश्चितम् ॥ ५८६ ॥
यतो रागद्वेषमोहमतिप्रचयया स्थितम् । ज्ञानादिक स एवैको वेत्ति तीर्थ्यास्तु नापरे ॥ ५८७ ॥ पौण्डरीक !
मुनेस्तस्मा महावैपसुधर्मणः । सर्वेऽपि एषोपदेशो मोक्षनिबन्धनम् ॥ ५८८ ॥ न पुनः शेषतीर्थ्यानां कुदेशोपम
तामृताम् । तदाकर्ण्य गुरोर्वाक्यं पौण्डरीकोऽवदत्पुनः ॥ ५८९ ॥ यथा नाथ ! यच मूलो व्यापक निजदर्शनम् ।
तथा तीर्थ्या यदि निजं मुपुस्तत्र किमुत्तरम् ? ॥ ५९० ॥ अथ प्रोचे गुरुर्वचो रागद्वेषविवर्जितः । शान्त्यादिक
स्तथा धर्मस्तत्त्वं ज्ञानादिकं पुन ॥ ५९१ ॥ मुक्तिरप्यात्मनोऽनन्तचतुष्टयमुखा स्थितिः । इति चेद् मुवत
तेऽपि तद्विवादो न नः सह ॥ ५९२ ॥ नाभिधाने हि विद्वांसो विवादं परस्य । कुर्वते । एवं च दृष्टिवादाङ्गे शास्त्रसि
द्धमपि क्रमात् ॥ ५९३ ॥ विध्वस्ताखिलसन्देहः पौण्डरीकोऽथ हर्षभाक् । जिनपादगुरोर्वाक्यं वचेति प्रत्यपद्यत
॥ ५९४ ॥ सोऽथ सिद्धान्तमभ्यस्यन् गुरुमूले विशेषतः । कालक्रमेण सम्पन्नो द्वादशाङ्गस्य पारगः ॥ ५९५ ॥
तथाचार्यपदे न्यस्य महेन महता ततः । सगुः समन्तभद्राख्याः स्वरूपस्ते परं पदम् ॥ ५९६ ॥ अथ प्राप्यावधि
मनःपर्याय । यमभ्राय । मूरिः स पौण्डरीकाख्यो जिनशासनदीपकः ॥ ५९७ ॥ चिरस्य सुचिरं सोऽथ भूरिलोक

१ ख्का निवि॰ ता॰ ।

ततः संलेखनां कृत्वा गत्वा च गिरिकन्दरं ।
प्रवोध्य च । धनेश्वराभिधं सूरिं निजस्थाने न्यवेशयत् ॥ ५९८ ॥ सोऽथ सम्प्राप
पादपोपगमेनायं तस्थौ शुद्धशिलातले ॥ ५९९ ॥ समाधिस्थः समासाद्य केवलं देवपूजितः । क्रमेण प्रापतुर्मोक्षं कर्म्माण्यु-
निःशेषक्लेशहीनं परं पदम् ॥ ६०० ॥ महाभद्रासुललिते अपि भक्तपरिज्ञया । सुमङ्गलाद्याः साध्व्यश्च देवलोक-
न्मूल्य मूलतः ॥ ६०१ ॥ ते तु श्रीगर्भराजाद्याः साधवो निखिला अपि । प्रायः सर्वशरीरिणाम् ॥ ६०३ ॥
मुपाययुः ॥ ६०२ ॥ अयं चासंव्यवहारपुरादारभ्य सन्निभः । अनुसुन्दरवृत्तान्तः विवेद तम् ॥ ६०४ ॥ जिनागमस्य
ततः समन्तभद्रस्य तस्य सूरेरयं यथा । प्रत्यक्षः कथ्यमानं तु महाभद्रा विशद ! प्रज्ञाविशालत्वेन
संसारिजीववृत्तमिदं तथा । प्रतीतं वर्ण्यमानं तु स्वत एव सुसाधवः ॥ ६०५ ॥ बुध्यन्ते सुललितां प्रति ।
सर्वथा । संजायन्ते परेभ्यश्च प्रतिपादयितुं क्षमाः ॥ ६०६ ॥ युग्मम् ॥ यथा च पौण्डरीकेण बुद्धं निशम्य बुध्यतां
कथ्यमानं लघुकर्म्मतया श्रुत्वा प्रसङ्गतः ॥ ६०७ ॥ बोधानुरूपं चक्रे च तथा युष्माभिरप्यदः । नैवास्ति लघु-
वोधानुरूपं च विधीयताम् ॥ ६०८ ॥ यथा सुमतिता भव्यपुरुषत्वं च जायते । भवतामप्यथेदृक्षा प्रतिबुध्यताम्
कर्म्मता ॥ ६०९ ॥ ततो यथा सुललिता भूयो भूयः प्रणोदिता । प्रतिबुद्धा तथा युष्माभिरपि भविष्यथ ॥ ६११ ॥
॥ ६१० ॥ बोध्यमानास्तथा किन्तु गुरूणां कण्ठशोषकाः । अगृहीतसङ्केताश्च भव्या यूयं श्रुत्वैनामनु-
तथापि गुरुभिर्यूयं बोध्या एव महात्मभिः । युष्माभिरपि बोद्धव्यं भवोच्छेदविधित्सुभिः ॥ ६१२ ॥ येनोच्चैर्गुरुकर्म्मका
सुन्दरस्य च महीभर्तुः कथामद्भुतां भो भव्याः ! शरणं जिनागममिमं यूयं श्रयध्वं सदा ।

अपि जयतस्य प्रसादादयं निर्वृयासिलमव्यजनसमुस्तां श्रेयःश्रियं प्राप्नुत ॥ ११२ ॥

इति श्रीश्रीचन्द्रसूरिशिष्यश्रीदेवेन्द्रसूरिविरचिते उपमितिभवप्रपञ्चाकथासारोद्धारे पूर्वभवचरितभीलकवर्णनो नाम अष्टमः प्रस्तावः समाप्तः ।

## अथ ग्रन्थकारप्रशस्तिः

समाश्रितो यः शरणं क्षमाभृद्गणेन कर्माशनिपातभीत्या । अगाधपारश्रियमादधानः स चन्द्रगच्छोऽस्ति सुवि प्रसिद्धः ॥ १ ॥ भव्यारविन्दप्रतिबोधहेतुरत्नप्रभः प्रतिपिब्धदोषः । अयमपूर्वेन्दुतुलामिह श्रीभद्रेश्वरो नाम बभूव सूरिः ॥ २ ॥ तस्याद्भुतपूर्वबलचन्द्ररोचिरजायत श्रीहरिभद्रसूरिः । धुर्य न कस्मै रहित चिकस्या तपश्च श्रियं च तनोति यस्य ॥ ३ ॥ श्रीमानजायत शान्तिसूरिर्यतः सद्यप्रादिव शिष्यमेघाः । ज्ञानामृतं प्राप्य शुभोपदेशधारा व्यधुः कस्य मनो न शस्यम् १ ॥ ४ ॥ ततो बभूवाभयदेवसूरिर्यदीयवाणी गुणरत्नरम्या । मेघामरेन्द्रलसिता विभाति वेलेव मध्यस्थजिनागमाब्धेः ॥ ५ ॥ प्रसन्नचन्द्रोऽथ बभूव सूरिर्वक्तुं गुणान्यस्य नहि क्षमोऽभूत् । सहस्रवक्त्रोऽपि समस्तरासकृतो प्रियेषेप रसातलेऽस्मात् ॥ ६ ॥ अथाभवनि श्रीमुनिरत्नसूरिः स्वबुद्धिनिर्धूतसुरेन्द्रसूरिः । रत्नन्ति शास्त्राण्यखिलानि यस्य स्थिरोभवे मानसरोहणाद्रौ ॥ ७ ॥ श्रीचन्द्रसूरिः सगुरुस्ततोऽ

१ बोधय' क० ख० ग० घ० ।

भूत्प्रसन्नतालङ्कृतमस्तदोषम् । चित्तं च वाक्यं च वपुश्च यस्य कं न प्रमोदोत्पुलकं करोति ? ॥ ८ ॥ सूरिर्यशोदेव
इति प्रसिद्धस्ततोऽभवद्यत्पदपङ्कजस्य । रजोभिरालिङ्गितमौलयोऽपि चित्रं पवित्राः प्रणता भवन्ति ॥ ९ ॥ तत्पा-
णिपद्मोल्लसितप्रतिष्ठः श्रीचन्द्रसूरिप्रभुशिष्यलेशः। देवेन्द्रसूरिः किमपीति सारोद्धारं चकारोपमितेः कथायाः
॥१०॥ इतश्च शिष्यो गणधारिदेवानन्दस्य रत्नप्रभसूरिपट्टे । बभूव सूरिः कनकप्रभाख्यो निधिर्गुणानामिह चन्द्र-
गच्छे ॥ ११ ॥ तदीयशिष्यः किल बालचन्द्रसूरेः कवीन्द्रादुदितप्रतिष्ठः । अशोधयद् बोधिविशुद्धयेऽमुं प्रद्युम्नसूरि-
र्विनयोपरुद्धः ॥ १२ ॥ यच्चान्यदप्यत्र निवेशितं स्यादन्यादृशं किञ्चन बुद्धिमान्द्यात् । अयं निबद्धोऽञ्जलिरस्ति सर्वं
तत्साधुभिः साधु निवेशनीयम् ॥ १३ ॥ श्रीविक्रमादित्यनरेन्द्रकालादष्टानवत्यर्यमसंख्यवर्षे [ १२९८ ] । पुष्यार्क-
भूत्कार्त्तिककृष्णषष्ठ्यां सम्पूर्णतामेष समाससाद ॥ १४ ॥ यावन्नौरिव भव्यतारणविधावास्ते भवाम्भोनिधौ,
श्रीसिद्धेन कृता कथेयमसमार्हद्वाक्यकाष्ठोच्चयैः । तावत् तद्गतसत्पदार्थनिचयस्योदञ्चनेऽसौ क्षमा, सारो-
द्धारकृतिः सदा तदनुगा नौकेव संसर्प्पतु ॥ १५ ॥ प्रत्यक्षरं निरूप्यास्य ग्रन्थमानं विनिश्चितम् । शतानि सप्त-
पञ्चाशत्त्रिंशत्समधिकान्यहो ! ॥ १६ ॥ ग्रन्थाग्रम्–५७३० ॥



